THE

PRINCESS OF WALES

SARASWATĪ BHAVANA TEXTS

*No. 68*



---

THE

# MADHVAMUKHĀLANKĀRA

---

GOVERNMENT SANSKRIT LIBRARY,

*BENARES*

---

1936

Price, Rs. 1-8-0]

THE

PRINCESS OF WALES

SARASVATI BHAVANA TEXTS

*No. 68*

---

EDITED BY

*Mahāmahopādhyāya*

GOPINATH KAVIRAJ, M. A.

---

THE

# MADHVAMUKHĀLANKĀRA

---

Printed by M. R. Kale,
at Shri Lakshmi Narayan Press, Benares City.

1936

**Saleable at half of the printed price.**

श्रीः

श्रीमद्वनमालिमिश्रविरचितः

# मध्वमुखालङ्कारः

---

श्रीमद्वैष्णवद्वैतसिद्धान्तप्रतिष्ठापनाचार्याणां श्रीमत्परमहंसपरिव्राजकाचार्य-
त्वाद्यनेकगुणगणालङ्कृतानां श्रीमदुत्तरादिमठाधीश श्री श्री १०८
श्रीमत्सत्यध्यानतीर्थ श्रीचरणानामन्तेवासिना वाराणसीस्थ-
राजकीयमहाविद्यालयद्वैतवेदान्ताध्यापकेन

**पण्डितशिरोमणि वरखेड नरसिंहाचार्येण**

संशोधितः ।

---

THE

# MADHVAMUKHĀLANKĀRA

BY

VANAMĀLI MIŚRA

*Edited with Introduction*

BY

**NARASINHACHARYA VARKHEDKAR**

*Asstt. Professor, Govt. Sanskrit College,*
*Benares.*

---

**1936**

# FOREWORD

Thanks are due to His Holiness Swami Satyadhana Tirtha of the Uttarādi Matha for placing at the disposal of the Govt. Sanskrit College Benares funds for publication of useful and interesting philosophical works bearing upon the Madhva system of Vedanta, of which a chair has already been opened through his munificence in the same College. The pages which are herewith being given out to the world represent the Sanskrit text of a work, called Madhvamukhālankāra, ascribed to the well-known author Vanamālī Miśra, whose reputation as a polemical writer of great abilities is recognised in the history of dualistic vedānta.

Vanamālī is credited with the authorship of several treatises, almost all of which are said to bear upon them the impress of his great literary power. The names of the works, as known from different catalogues of Mss., are the following:

1. Nyāyāmṛita Saugandhya (or Saurabha), commentary on Nyāyāmṛita of Vyāsatīrtha. This work too is in course of publication in this very series and is expected to come out shortly.
2. Nyāyaratnākara (Hultzsch, 1936, p. 129. See No. 1540 also).
3. Advaita Siddhi Khaṇḍana (Bhandarkar's Report, 1882, p. 108).

   This is an attempt to refute Madhusūdana's

famous work on dialectical monism, which attacked the Nyāyāmṛita of Vyāsatīrtha and to re-establish the metaphysical position of the Madhva School.

4. Bhaktiratnākara ( Bhandarkar, 1882, p. 111 )
5. Māruta maṇḍana ( Bhandarkar, 1882, p. 113 )
6. Śruti Siddhānta ( Bhandarkar, 1884, p. 73 ).
7. Jīveśābhedadhikkāra (Benares Sanskrit College Library, Mahīdhara Collection).
8. Pramāṇasaṃgraha (Benares Sanskrit College Library, Mahīdhara Collection).
9. Brahmasūtra Siddhānta Muktāvalī (Benares Sanskrit College Library, Mahīdhara Collection).
10. Viṣṇutattva prakāśa (Benares Sanskrit College Library, Mahīdhara Collection).
11. Vedāntadīpikā (Benares Sanskrit College Library, Mahīdhara Collection).
12. Vedānta Siddhānta Saṃgraha (Benares Sanskrit College Library, Mahīdhara Collection).
13. Nyāyāmṛita taraṅginī kaṇṭakoddhāra (Benares Sanskrit College Library, Mahīdhara Collection).
14. Abhinava Parimala (Benares Sanskrit College Library, Mahīdhara Collection).
15. Vedānta Siddhānta Muktāvalī (Benares Sanskrit College Library, Mahīdhara Collection).
16. Madhvamukhālankāra (the work under notice).

In the present work Vanamali refers to Nyayasudha (or Sudha) (pp. 24, 45, 105, 107), to Tantraratna (p. 67), to Anuvyakhyana (p. 47), to Chandrika (p. 45), to Brahmatarka (pp. 104, 105), to Vasistha Ramayana (p. 127) and to Magha Kavya (p. 118). Of these Nyayasudha is evidently the Commentary of the same name by Jayatirtha on Ananda Tirtha's Brahma Sutra Anuvyakhyana. The Chandrika stands for Tatparya Chandrika, which is a commentary by Vyasa Tirtha on Jaya Tirtha's Brahma Sutra Tattva-prakasika. Anuvyakhyana is certainly the work of Ananda Tirtha himself. The names of Vasistha Ramayana and Magha present no difficulties. But Brahmatarka is not precisely known. There is a work bearing this title ascribed to Appayya Diksita.

Pandit Narasinhacharya, to whom the editing of the text was entrusted, is to be sincerely congratulated on having accomplished his task with much care and thoroughness.

GOVERNMENT SANSKRIT COLLEGE, BENARES. } **Gopinath Kaviraj.**

# प्रास्ताविकं किञ्चित्



श्री हनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक-
श्रीलक्ष्मीहयग्रीवाय नमः ।



विधूयाऽन्यमतध्वान्तं द्वैततत्वं प्रकाशयन् ।
श्रीसत्यध्यानचण्डांशुर्दद्यान्मे विमलां दृशम् ॥

न किल परोक्षमिदं प्रेक्षावतां यद् विरुद्धयोर्द्वयोर्मतयोर्यन्मततत्वान्युभयसम्मतप्रमाणभावैः वचनैः सिद्ध्यन्ति, यन्मततत्वज्ञानेन च वादिप्रतिवादिनावुभावपि अनिष्टक्षयमिष्टप्राप्तिं चाङ्गीकुरुतः, तदेवाविशङ्कितमुपादेयं नान्यत् । तथाभूतं च मतं द्वैतमतमेव अतएव "श्रीमन्मध्वमते हरिः परतरः सत्यंजगत्तत्त्वतो भेदः" इत्यादि संग्रहश्लोकोक्तानि गुणपूर्णनारायणसर्वोत्तमत्ववेदतदुक्तधर्मतत्फलभूतलोकादिसर्वजगत्सत्यत्त्वजीवेश्वरभेदादिरूपाणि तत्त्वान्येव श्रुतिगीतासूत्ररूपप्रस्थानत्रयप्रतिपाद्यानि नेतराणीति तथा द्वैततत्वज्ञानिनां सगुणशरणानां न पुनरावृत्तिः इति "न च पुनरावर्तते" इत्यादिश्रुतिभिरुपपादितमनावृत्तिश्शब्दादिति सूत्रे इति शाङ्करभाष्यभावगाम्भीर्यनिर्णयकारावर्णयन्ति, यथोक्तम्—

शास्त्राणां भेद एव श्रुतिशिखरगिरामागमानाञ्च निष्ठा
साकं सर्वैः प्रमाणैः स्मृतिनिकरमहाभारतादिप्रबन्धैः ।
तत्रैव व्याससूत्राण्यकुटिलविधया भांति तात्पर्यवन्ति
प्रत्नैराचार्यरत्नैरपि परिजगृहे शङ्करार्यैः स चापि ॥ इत्यादिना

यथा च द्वैतस्यैव सर्वप्रमाणप्रतिपाद्यत्वं तथा सुनिपुणमुपपादितं श्रीमद्भिर्गुरुचरणैः प्रस्थानत्रयसारसङ्ग्रहादिप्रबन्धेष्विति ।

एवं वस्तुस्थितावप्यप्पय्यदीक्षितमहाभागाः, एतत्सिद्धान्ताग्राह्यत्वसाधनाय,

तथाप्यानन्दतीर्थीयमतमग्राह्यमेव नः ।
यत्र वैदिकमर्यादा भूयस्याकुलतां गता ॥

इत्यारभ्य—

आद्रियध्वमिदमध्वदर्शनं व्यध्वगं त्यजत मध्वदर्शनम् ।
शांकरं भजत शाश्वतं मतं साधवः स इह साक्ष्युमाधवः ॥

इत्यन्तं, ( मध्वमतमुखमर्दनं ) नाम प्रबन्धमरचयन् यस्य च प्रतिपदखण्डनरूपाः श्रीमत्सत्यनाथतीर्थकृता अभिनवगदा, श्रीमद्विजयीन्द्रतीर्थकृता अपेयकपोलचपेटिका, मध्वाध्वकण्टकोद्धारः, नारायणपण्डिताचार्यविरचितः **अद्वैतकालानलः** इत्यादयोऽनेके प्रबन्धाः दक्षिणदेशे पठनपाठनप्रणाल्यां विराजन्ते । कदाचित् काशीस्थराजकीयसरस्वतीभवने तदध्यक्षाणामस्मत्प्रियसुहृदां साहित्यवारिधीनां खिस्ते इत्युपाह्वपण्डितवर**नारायणशास्त्रिमहोदया**नामनुमत्या वेदभाष्यकर्तां पण्डितमहीधरमहोदयानां पुस्तकालयात्संगृहीतं द्वैतसिद्धान्तग्रन्थग्रन्थिमुन्मुच्य तत्रत्यानि पुस्तकान्यद्राक्षम् येषु प्रायः **श्रीवनमालिदास**विरचिताः, केचन महीधरवंशजैः प्रणीताः प्रबन्धाश्चासन्, तद्दर्शनक्षण एव उत्तरभारते द्वैतसिद्धान्तस्य नासीत्प्रचार इति भ्रमो मे विगलितः । यद्यभविष्यदुत्तरभारते द्वैतसिद्धान्तप्रचारस्तदा अवश्यमेव उत्तरभारतीयैर्विरचिताः द्वैतसिद्धान्तग्रन्था उपलब्धा अभविष्यन् इति परकीयकोलाहलशान्तये पुनरवश्यं मुद्रापणीया एते ग्रन्था इति समुद्भूद्विचारो मे मनसि । एवं विचाराकुले मयि भाग्यवशादिव तत्रभवद्भिः राजकीयविद्यालयप्रधानाध्यक्षैः सकलदर्शनसारज्ञैः महामहोपाध्यायैः पण्डितमान्यश्री**गोपीनाथ**कविराजमहोदयैः **सरस्वतीभवनतः** प्रकाश्यमानानां द्वैतसिद्धान्तानुयायिनां ग्रन्थानां संशोधनकार्यं भवता सम्पादनीयमित्याज्ञप्तः प्राक्कदाऽप्यकृतसंशोधनकर्माप्युत्साहातिरेकात्तत्र प्रवृत्तोऽभूवम् । तेषु च प्रथमं **वनमालिदासप्रणीतप्रबन्धा** एव मुद्रणाय स्वीकृताः । तत्राऽपि **न्यायामृतसौगन्ध्यस्य** त्रुटिततया आदौ संपूर्णस्य **"मध्वमुखालङ्कारस्यैव** मुद्रापणमुपक्रान्तम् । अयं च ग्रन्थः अपेयदीक्षितकृत**मध्वशास्त्रमुखमर्दनाभिधग्रन्थस्य**—खण्डनरूपः ।

अत्र प्रथमतः—

सदसच्छास्त्रतत्प्रवर्तकविचारः १ जिज्ञासान्यायवर्णनम् २ जन्मादिन्यायवर्णनम् ३ शास्त्रयोनित्वन्यायवर्णनम् ४ समन्वय न्यायवर्णनम् ५ ईक्षतिन्यायवर्णनम् ६ शेषब्रह्ममीमांसातात्पर्य वर्णनम् ७ । इति सप्तप्रकरणानि ।

तत्र प्रथमप्रकरणे—

चूतस्य नापराधोस्ति ह्युष्ट्रो दूराद्यदुज्झति ।
सौभाग्यं नैव निम्बस्य यदादत्तेऽनुरागतः ॥
इदमेवोत्तरं तस्य मन्दबुद्धेः सुरद्विषः ।
विष्णुद्वेषाद्ब्रुवाणस्य ह्युत्तरं नास्ति चापरम् ।। इत्यादिना—

अद्वैतसिद्धान्तस्य तामसजनमोहार्थं भगवच्छंङ्करोपदिष्टत्वं तन्मोहितमणिमत्प्रवार्तितत्वं च प्रसिद्धपुराणवचनोपन्यासेन समर्थितम्, तथा अद्वैतमते सामान्यदूषणान्युपवर्ण्य अपेयदीक्षितोद्भावितानि द्वैतसिद्धान्तसामान्यदूषणानि सुदूरमुत्सारितानि श्रीमतोमध्वस्य वाय्ववतारत्वे च पुराणतदुपबृंहितश्रुतिवचनान्युदाहृतानि—

यथा श्रीमच्छबरशङ्करश्रीकण्ठरामानुजादीनां "ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्या" "यथाह्ययं ज्योतिरात्मा विवस्वान्" "यश्च शिव इति वाचं वदेत् तेन सह संवसेत्" "इन्द्रः शचीपतिर्बलेन पीडितः" इत्याद्यप्रसिद्धश्रुत्युदाहरणं न दोषाय किन्तु सर्वज्ञत्वसम्पादनेन भूषणायैव; तथा आचार्यमध्वस्याप्यप्रसिद्धश्रुत्युदाहरणमलङ्कार एव न दोषः ।

यथा च श्रीमच्छङ्कराचार्याणां "नन्वजाशङ्कश्छाग्यां रूढः" १।४।८ ब्र० सू० शां० इत्यादौ श्रीमत्पाणिनीयादिप्रसिद्धव्याकरणविरुद्धशब्दप्रयोगः, श्रीमतःकालिदासस्य च "त्रियम्बकं संयमिनं ददर्श" इत्यादौ वैदिकशब्दप्रयोगः न दोषाय; तथा मध्वगुरोरपि प्रसिद्धव्याकरणविरुद्धशब्दप्रयोगो वैदिकशब्दप्रयोगश्च न दोषाय, किन्तु पाणिन्याद्यनधिगतमहाव्याकरणाभिज्ञत्ववैदिकोत्तमत्वसाधनेन भूषणायैव । यदि "न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्" इति श्रुत्या वृत्तान्यथाभावो न दोषः तदा "रामं लक्ष्मणपूर्वजं रघुवरमित्यादिरामायणपद्यानुसारिणः

भिन्नभिन्नवृत्तयुक्ताऽर्धद्वयोपेतस्य' "पान्त्वस्मान्पुरुहूतवैरिबलवन्" इत्यादिपद्यस्य निर्माणमपि न दोषः, किन्तु आदिकविसम्प्रदायप्रवर्तकत्वं साधयन् मन्डनायैवेत्यादि समर्थितम् ।

द्वितीयप्रकरणे—

आत्मा ब्रह्मेत्यधीतः श्रुतिशिखरगणैः निर्विशेषश्च सर्वैः ।
किं तत्रस्वप्रकाशे गुणलवरहिते वस्तुशास्त्रेण चिन्त्यम् ।
इत्याक्षेपो गुरूणां नतिशतविषये स्वाप्रणम्यत्ववादः ।
श्रुत्यन्तानां निरूप्यः सयदिजडमते केन शास्त्रस्य न स्यात् ॥ १ ॥

इत्यप्पय्यदीक्षितकृताक्षेपपद्यस्य प्रत्युत्तररूपयोः—

आत्मा ब्रह्मेतिपूर्वानुभणतिरिह ते पूर्वपक्षे न पूर्वा ।
पूर्वाचार्येण पूर्वाधिकरणविषये सर्वथानोर्यकारि ।
तस्मान्माध्वागमाध्वावगमविकलते निग्रहस्थानमेवै ।
तत्तावत्तन्निरासेऽन्यदपिनिरनुयोज्यानुयोगश्छलं च ॥१॥
ऐक्यं जीवेशयोस्तत्त्वमसिमुखरवैरुच्यमानं विरोधात् ।
सिद्धत्वात्प्रत्यगात्माऽप्यविषय इति नो शास्त्रमारम्भणीयम् ॥
इत्याक्षेपे स्वकीये गुरुनतिविषये स्वाप्रणम्यत्ववादं ।
स्वीकृत्याऽस्मान्प्रतीत्थं भषसि जडमते व्याहतिस्स्यान्न किं ते ॥२॥
इत्यद्वैतकालानलपद्ययोस्तात्पर्यं गद्यरूपेणोपवर्णितम् ।

सुधायां "ज्योतिषां स्तोमोहि ज्योतिष्टोमः" इत्यत्र यद्यपि अन्यैः सुधाव्याख्यातृभिः "एतानि वावतानि ज्योतींषिय एतस्य स्तोमाः" इति वाक्यशेषप्रदर्शितविग्रहातिरिक्तविग्रहप्रदर्शनम्, "ज्योतिरायुषोः स्तोमः" इति सूत्रव्याख्यातृभिः प्राचीनवैय्याकरणैः जरन्मीमांसकैश्च "समासे किम्" इत्यादिना प्रदर्शितस्य षष्ठीतत्पुरुषविग्रहस्येतरोपलक्षणायाऽनुवादमात्रमित्याद्यभिहितम्; तथाऽप्यत्र "यथा" "अथातो धर्मजिज्ञासा" इति सूत्रभाष्ये "धर्माय जिज्ञासेतिविग्रहप्रदर्शनमिव भाति, न तु तथा, प्रकृतिविकृतिभावावानुपपत्तेः, किंत्वार्थिकार्थकथनं तत्, समासस्तु षष्ठीतत्पुरुष एवेति व्याख्यातं वार्तिककृता; तथा प्रकृतेऽपि "यत्र" इति शेषः वृत्तिपदार्थमात्रप्रदर्शनपरतया अन्य-

पदार्थाप्रदर्शनस्यादोषत्वात्, इत्यादिना बहुव्रीहिसमासीयार्थिकार्थप्रदर्शनपरं सुधावाक्यमिति सूचितम् ।

अत्र श्रीमदप्पय्यदीक्षितैः "ये वै चत्वारः स्तोमाः" इत्यनुवाकस्थात् त्रिवृत्पञ्चदशः सप्तदश एकविंशः एतानि वावतानि ज्योतींषि य एतस्य स्तोमा इति वाक्यात् त्रिवृत्-पञ्चदश, सप्तदश, एकविंशरूपस्तोमचतुष्टयवत्वरूपोऽर्थः प्रतीयते एतेषां चतुर्णामेव ज्योतिशब्दवाच्यत्वम् । सत्यप्येवं ब्रह्मसूत्रशाङ्करभाष्यरत्नप्रभायामीक्षत्यधिकरणे त्रिवृत्पञ्चदशेत्यादिवाक्यस्थत्रिवृच्छब्दस्य पञ्चदशसप्तदशैकविंशेषु प्रत्येकं सम्बन्धाभिप्रायेण त्रिवृत्पञ्चदशः त्रिवृत्सप्तदशः त्रिवृदेकविंश इत्येते स्तोमाः तदर्थप्रकाशकत्वेनेत्याद्यभिहितम्, तत्र त्रिवृच्छब्दस्य स्तोत्रीयऋक्संख्याप्रकाशकस्य ऋङ्नवकपरत्वेन पञ्चदशादिशब्दैः सामानाधिकरण्यं कथमुपपद्यतामिति मनागप्याविमृश्य केवलं परपक्षदूषणान्वेषणायैव प्रयतितमिति केचिद्वर्णयन्ति ।

तृतीयप्रकरणे—

> यतो वेत्याद्युक्तिः कथमिव च जीवे न घटते ।
> यतस्तद्ब्रह्मेतिश्रुतिरपसरेद्रूढिविषयात् ॥
> जगत्स्रष्टुं सर्वं प्रभवति खलु ध्यानविषयः ।
> समस्तोऽयं मानोरथिकमपि जीवस्तव मते ॥

इति श्रीमदप्पयदीक्षितकृताक्षेपप्रतिक्षेपार्थस्य—

> यतो वेत्याद्युक्तिः कथमिव नृशृंगे न घटते ।
> यतोऽसद्ब्रह्मेति श्रुतिरपसरेद्रूढिविषयात् ॥
> अनिर्वाच्यं द्रष्टा प्रभवति जगत्स्रष्टुमखिले ।
> नृशृंगं तन्मानोरथिकमपि सर्वं तव मते ॥

इत्यद्वैतकालानलीयश्लोकसंगृहीतोऽर्थो विशदीकृतः ।

चतुर्थप्रकरणे—

"सर्वे वेदायत्पदमामनन्ति" (का० उ०) "तावा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः" (ऐ० उ०) "वेदैश्च सर्वैरहमेव वेद्यः" (गीता)

वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥ (हरिवंशे)
वेदाक्षराणि यावन्ति कथितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्तितानि न संशयः ॥

( शौनकीयऋग्विधाने ) इत्यादिवचनैः श्रीविष्णोः वैदिकसर्ववर्णवाच्यत्ववर्णनेन कैमुत्यन्यायप्राप्तं तस्य वैदिकवसन्तादिपदवाच्यत्वं यदाचार्यचरणैरुपवर्णितं तेन तेषामितरभाष्यकारानधिगत श्रुतिस्मृतितात्पर्यनिर्णयनैपुण्यमेव सिद्ध्यति ।

एतेन एकस्यैव "वसन्ते" इत्यस्य कर्माङ्गकालपरतायां सप्तम्यन्तत्वं, श्रीविष्णुपरतायां च सम्बुध्यन्तत्वं, कर्मपरतायां ज्योतिषा इति तृतीयान्तत्वम् , श्रीविष्णुपरतायां "ज्योतिष" इति सम्बुध्यन्तत्वं, "आयजेत" इत्यस्य कर्मपरत्वे क्रियापदत्वं, विष्णुपरत्वे सम्बोधनरूपत्वं, वैदिकमर्यादाविरुद्धमित्यर्वाचीनानामाक्षेपः सुदूरपराहतः यतस्तथासति भविष्योत्तरपुराणान्तर्गत-आदित्यहृदये । ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः । इत्युपक्रम्य

अग्निमीळेनमस्तुभ्यमिषेत्वोर्जेस्वरूपिणे ।
अग्नआयाहिवीतस्त्वं नमस्ते ज्योतिषांपते ।
शन्नोदेविनमस्तुभ्यं जगच्चक्षुर्नमोस्तुते ॥ इत्यत्र

ऋग्वेदादिभागस्य—

"अग्निमीळे" इत्यस्य एकपदत्वसम्बोधनरूपत्वे ।

यजुर्वेदादिभागस्य—

"इषेत्वोर्जे" इत्यस्यैकपदत्वप्रथमान्तत्वे ।

सामवेदादिभागे—

"अग्न आयाहिवीत ये" इत्यत्र "अग्नआयाहिवीत" "ये" इति पदच्छेदेन अग्नआयाहिवीत इति सम्बोधनम् ।

अथर्ववेदादिभागे—

"शन्नोदेवीरभिष्टये" इत्यत्र "शन्नोदेवीत्यस्य एकपदत्वसम्बोधनरूपत्वे स्फुटमभिधाय एवमेव "वसन्ते" इत्यादिपदानामपि सम्बो-

धनरूपतां सूचयन् भगवान् पुराणाचार्यो वेदव्यासोऽपि वैदिकमर्यादा-ऽनभिज्ञः स्यात् ।

तथा च वेदव्यासस्यैव तच्छिष्यस्याप्याचार्यमध्वस्य सकलवैदिक-पदानां विष्णुसम्बोधनरूपत्ववर्णनं भूषणमेवेत्यादिसूचितम ।

षञ्चमप्रकरणे—

स्फारात्तत्तत्पुराणागमवचनशतप्रापितायान्यांनिन्दा ।
तत्तद्भक्त्यादिसिध्यै स्तवनविरचने सा भवेद्द्वारमात्रम् ।।
कर्मानुष्ठापनार्थं किमु निरतिशयां ब्रह्मसंस्थादिनिंदा—
मापस्तम्बादिवाक्ये न कलयसि ततः काऽस्य हानिस्तवेष्टा ।।

इत्यपेयदीक्षितश्लोकखण्डनार्थस्य—

अथ यदि न हि निन्दान्यायमालम्ब्य सव ।
परिहरसि विरोधं वस्तुतत्वार्थवाचाम् ।।
तदिह विधिनिषेधोच्छेदनं किञ्च तन्त्र-
द्वयमपि वितथं स्यादेवमेवाविरोधात् ।।

इत्याद्यद्वैतकालानलीय संग्रहश्लोकभावार्थो विस्तरेण वर्णितः—

षष्ठप्रकरणे—

न ध्येयं ब्रह्म नेदं यदिदमितिगिरा ह्यभ्युपेतं त्वयाऽतो ।
ध्येयार्थानां श्रुतीनां क्वचिदपि न च तद्वाच्यमित्यभ्युपेयम् ।।
नोचेन्नध्येयमेतत्कथमितिभवती स्यादवार्यैवशङ्का ।
यद्वाचेतिश्रुतिश्च क्षिपतितदसनायैव वाच्यत्वमस्य ।।

इतीक्षतिनयाक्षेपपद्यनिराकरणपरस्य—

वेदान्तैरुक्त आत्मा श्रुतिमतिनियतध्यानसाक्षात्क्रियाणां ।
साक्षात्संवेदनीयस्तदिह तदनुपास्यत्वशङ्का भृशङ्का ।।
अव्यक्तस्याकृतिर्यत् स्फुरति मनसि तद्ध्येयता सृष्टिवाक्यै-
र्वाच्यस्यावाच्यताऽप्यद्भुतगुणगरिमत्वादि नैवोपपन्ना ।।
इत्यद्वैतकालानलीयपद्यस्यार्थः संगृहीतः ।

सप्तमे प्रकरणे—

आनन्दमयोऽभ्यासादित्यारभ्य "अनावृत्तिः शब्दादनावृत्तिः" शब्दादित्यन्तस्य सकलब्रह्ममीमांसाशास्त्रस्य तात्पर्यमुपवर्णितम्।

एतद्ग्रन्थकाराः श्रीवनमालिमिश्राः कं देशं जन्मना मण्डयामासुः कश्चैतेषामवस्थितिसमय इत्यत्र नास्माभिः प्रभूततमं निर्णायकमुपलब्धमद्यापि तथाऽपि ( श्रीमन्मध्वमुखालङ्कारस्य ) एतद्ग्रन्थस्यान्तिमश्लोके श्री० गोकुलक्षेत्रतः प्राग्दिशि नातिदूरवर्ती कश्चन ग्राम इति ब्रह्मानन्दविरचितलघुचन्द्रिकाखण्डनात्मकन्यायामृतसौगन्ध्यप्रणयनात् विक्रमीयसप्तदशशताब्द्यामेते आसन्निति च सिध्यति, अधिकं चैतेषां चरितं न्यायामृतसौगन्ध्यभूमिकायां प्रकाशयिष्यामः। मध्वमुखालङ्कारस्य आदर्शपुस्तकान्तराऽलाभात् प्रायोमूलदृष्टाः पाठाः यथावदेवाऽवस्थापिताः।

शुद्धिपत्रं चान्ते संयोजितम्—

संशोधनापरिचयान्मानुषस्वभावसुलभात्प्रमादाच्चावशिष्टानां दोषाणां संशोधने सहृदयाः सदया भवन्तु इति साञ्जलिबन्धमभ्यर्थ्यते।

विदुषां वशंवदः
**वरखेडोपाह्वो नरसिंहाचार्यः।**

# मध्वमुखालङ्कारः ।

श्रीवनमालिदासकृतः ।

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक-
श्रीलक्ष्मीहयग्रीवाय नमः ।

सदमितगुणसिन्धुः सर्ववेदाभिधेयो
विगतविमतिधामा हेयशून्यो रमेशः ।
विधिशिवसुरराजैः सेव्यमानाङ्घ्रिकञ्जः
स्फुरतु मनसि मे स श्रीहयास्यो मुकुन्दः ॥१॥

श्रीमन्मारुतमाचार्यं मायिमर्दनतत्परम् ।
मुनीन्द्रोपास्यपादाब्जं ज्ञानसिन्धुं नमाम्यहम् ॥ २ ॥

तान्त्रिकाणां गुरुं वन्दे जयतीर्थं मुनीश्वरम् ।
कुमतध्वान्तचण्डांशुं व्यासतीर्थं धियां निधिम् ॥३॥

निरस्ता दूषणाभासास्सन्न्यायैर्महतां पुरा ।
तानेव श्रावयेऽथापि स्वश्रुतस्य शुशुत्सया ॥ ४ ॥

श्रीमन्मध्वमुखस्यायं श्राव्यते वनमालिना ।
अलङ्कारोऽसतां यस्माद्यथा स्यान्मोदनं सताम् ॥५॥

तत्र सदनन्तगुणे सत्याशेषविश्वोदयादिकर्तरि विष्णु-
रूपे परब्रह्मणि ब्रह्मसूत्रयोजनं यत्तदेव सकलश्रुत्यनु-
कूलत्वात्प्रामाणिकैरङ्गीकार्यम् । न तु प्रत्यगभिन्ननिर्वि-
शेषचिन्मात्रे मायिकृतं योजनम्, तादृशे ब्रह्मणि माना-
भावात् । धर्मिज्ञानसाध्यसप्रकारकसंशयनिवर्तकैक-

कोटिप्रकारकनिश्चयजनकानां वेदान्तानां सगुणब्रह्मपरत्वावगमात् । शब्दस्य प्रमाणमात्रस्य वा विशिष्टार्थबोधकत्वस्वाभाव्यात् । न च लक्षणया वेदान्तानां चिन्मात्रे तात्पर्यम् , चिन्मात्रस्याध्यस्ताधिष्ठानतयाऽज्ञानादिसाक्षितया सदाभासमानत्वेन तत्र तात्पर्यासम्भवात् । 'सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते' इति वदता परेण सर्वज्ञानविषयत्वाङ्गीकारात् । न च विशिष्टमेव सर्वप्रत्ययवेद्यम् , शुद्धं चौपनिषदमिति वाच्यम्, अधिकस्य भानेऽपि श्रुतिवेद्यस्य भानावश्यकत्वात् । न हि दण्डिनि भाते पुरुषो न भासते । अन्यथा विश्वाधिष्ठानस्य शुद्धस्याभाने जगदान्ध्यापत्तेः । सत्यब्रह्मादिपदलक्ष्यस्य गङ्गापदलक्ष्यतीरस्यागङ्गात्ववदसत्यत्वाब्रह्मत्वाद्यापत्तेः । न च तत्र जहत्स्वार्था लक्षणा, तस्मात्तथात्वम्; इह त्वजहत्स्वार्थेति कथमसत्यत्वाद्यापत्तिरिति वाच्यम् , काकेभ्यो दधि रक्ष्यतामित्यत्र हि यथा काकत्वस्य काकपदशक्यस्य त्यागो व्यक्तेरत्याग इति जहदजहल्लक्षणायामशक्यस्य मार्जारादेर्लाभस्तथा असत्यत्वादिलाभ आवश्यकः। अन्यथा लक्षणावैयर्थ्यम् । न हि शक्यैकदेशे लक्षणा सार्थिका क्वापि दृष्टा । अतोऽचिन्त्यानन्तसद्गुणालये ब्रह्मण्येव सूत्रयोजनं युक्तम् ।

केचिदत्र वदन्ति—यद्यप्यन्यदीयानि सगुणयोजनान्युपादेयानि, तथाप्यानन्दतीर्थीययोजनमनुपादेयमेव । अन्यदीयेषु हि योजनेषु सगुणनिर्गुणभेदाभेदादिविषयतया कतिपयेष्वेव सूत्रेषु प्रकारभेदः । अन्येषु सूत्रेषु क्वचित्क्वचित् पूर्वपक्षसिद्धान्तरचनाभङ्गीभेदेऽपि फलतो न विवादः। आनन्दतीर्थीययोजने प्रायः सर्वत्रैव प्रकार-

भेदः, सोऽप्यन्येषामसंप्रतिपन्नः, तेषु स्वमात्रकल्पिते-ष्वर्थेषु चतुरकमठमाठरकौण्ठरव्यकौण्डिन्यमाण्डव्यमा-र्कण्डेयमौद्गल्यपौष्यायणपौत्रायणसौत्रायणपाराशर्यायण-माध्यन्दिनायनकाषारवकौषारवकौषायणबृहदुद्दालकायन-कौशिकसौपर्णवत्सगौपवनभाल्लवेयाग्निवेश्यचतुर्वेदसंहि-ताचतुर्वेदशिखेन्द्रद्युम्नपरमश्रुत्यादिवचनानि, तदनुसा-रीण्यध्यात्मनारायणसंहिताबृहत्संहितामहासंहितानारा-यणतन्त्रब्रह्मतन्त्रपुरुषोत्तमतन्त्रमायावैभवब्रह्मवैवर्तब्रह्म-तर्कभविष्यत्पर्वादिवचनानीति चात्यन्ताप्रसिद्धानामेव वचनानां साक्षितयोपन्यासः।

तदुपन्यासप्रसक्तस्वानासत्वशङ्काव्युदासाय हनुम-द्भीमसेनक्रमेण वायोः स्वयं तृतीयावतार इत्युद्घोषः। तत्र च साक्षितया—

प्रथमो हनुमान्नाम द्वितीयो भीमसेनकः।
पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः॥

इति स्मृतिवचनमस्तीति स्वयमेवोदाहृतवान्। "बळित्था तद्वपुषे धायि दर्शतम्" इत्याद्यृग्वेदमन्त्रस्य स्वकल्पितवाय्ववतारत्रयपरतया प्रदर्शनमित्यादि तु प्रामाणिकमर्यादोल्लङ्घनं भूयसा दृश्यते; तथापि युक्तियुक्तं वचो ग्राह्यं न तु पुरुषगौरवमिति न्यायेन तन्मतं श्रद्-धीमहि, यदि तत्रोपपन्नं किंचिदाकलयेम। नचैवं प्रायेण हि तन्मते स्वमात्रहृदयारूढानि वचनान्येवोपजीवितानि न तु न्यायाः। ये तु न्यायाः प्रदर्शितास्तेऽप्यत्यन्तशिथिला एव क्वचित्क्वचिदाश्रिताः। पूर्वमीमांसकमर्यादाऽप्य-सामञ्जस्येनैव नीता। प्रायेण चासाधुभिरेव शब्दैर्य-

वहारः। श्लोकरचनायां त्वन्वयासंभवो वृत्तान्यथाभावश्चाधिकः। सर्वमेतत्तदीयभाष्यानुव्याख्यानभारततात्पर्यनिर्णयादिग्रन्थदर्शिनां स्पष्टमतोऽनुपादेयमेव तन्मतमिति।

अत्रोच्यते—

सर्वथाऽऽनन्दतीर्थस्यानुपादेयं मतं हि नः।
स्वीकार्याण्यविरोधाच्चेतराणीत्याह यः किल ॥
चूतस्य नापराधोऽस्ति ह्युष्ट्रो दूराद्यदुज्झति।
सौभाग्यं नैव निम्बस्य यदादत्तेऽनुरागतः ॥
इदमेवोत्तरं तस्य मन्दबुद्धेः सुरद्विषः।
विष्णुद्वेषाद्ब्रुवाणस्य ह्युत्तरं नास्ति चापरम् ॥

यदुक्तमन्ययोजनेषु क्वाचित्को भेदः, आनन्दतीर्थीययोजने प्रायः सर्वत्रैव प्रकारभेद इति, तत् शोभते, सार्वत्रिकप्रकारभेदस्य दर्शनान्तरत्वोपपादकत्वात्। अन्यथा त्वदीयविवरणवाचस्पतिवत्क्वाचित्कभेदोपपत्त्या दर्शनान्तरत्वं न स्यात्। दैवात्क्वाचित्कप्रकारैक्येऽपि प्रायः प्रकारभेद एव हि दर्शनभेदे बीजम्। न तावदप्रसिद्धश्रुत्युदाहरणं दोषः, श्रौतस्मार्तकर्मविधायकानां तत्तन्मन्त्राणां च खिलानामेव प्रायेणापस्तम्बादिभिः स्वस्वसूत्रेषूदाहरणात्। ऋषीणां सर्वज्ञत्वात्तत्तच्छ्रुतिदर्शित्वात्तदुपपद्यत इति चेन्न, सर्वज्ञत्वस्यास्मदाचार्येऽपि दण्डेनानिवारणात्। त्वदीयश्रद्धाजाड्यस्यानुपादेयत्वात्। कथमन्यथा गौडपादशंकरादेः सर्वज्ञत्वादिकमङ्गीकुरुषे ? प्रत्युत--

मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥

इति पाद्मवचनेन त्वन्मतस्यैव बौद्धत्वमुच्यते ।

चतुर्भिः सहितः शिष्यैः शंकरोऽवतरिष्यति ।

इति त्वदुदाहृतवचनं तु विप्रलिप्सामूलत्वेनोपपन्न-मिति न तद्बलात्त्वन्मतस्य प्रेक्षावदुपादेयत्वम् । त्वन्म-तस्य च मोहशास्त्रत्वं पुराणेषु स्पष्टमावेद्यते । यथा कौर्मे श्रीमुष्णमाहात्म्ये पञ्चमेऽध्याये—

पुरा भागीरथीतीरे नियन्ता पृष्टवान् मुनिम् ।
नष्टा भागवता धर्माः सच्छास्त्राणि कलौ युगे ॥
इति श्रुतं मया पूर्वं तीर्थयात्राप्रसंगतः ।
कथं नष्टा भविष्यन्ति पुनः स्थास्यन्ति वै कथम् ॥
वद विद्वन्महाबाहो को बोद्धारं करिष्यति ।

वामदेव उवाच—

चतुःसहस्रे द्विशते गते सौगन्धिके वने ।
निहता भीमसेनेन द्वापरान्ते नृपोत्तम ॥
सौगन्धिकाख्ये निहतास्ते[1] खला दैत्यपुङ्गवाः ।
रुद्रेण निहता ये च त्रैपुराश्च कलौ युगे ॥
चतुःसहस्रेऽ[2]दशते गते मणिमदादयः ।
जनिष्यन्ति ब्रम्हयोनौ दैत्याः सत्कर्मदूषकाः ॥
मिथ्यावादमसच्छास्त्रं करिष्यन्ति कलौ युगे ।
गोपयिष्यन्ति सद्धर्मान् सच्छास्त्रपरिपन्थिनः ॥
एवं धर्मेषु नष्टेषु शास्त्रेषु च कलौ युगे ।
देवैर्विज्ञापितो विष्णुर्वायुमाज्ञापयिष्यति ॥
उद्धरस्व महाबाहो मम धर्मान्सनातनान् ।
इत्याज्ञप्तो भगवता कलौ वायुर्भविष्यति ॥

---

१ एवं क्रोधवशाः खलाः इत्यपि पाठः ।

२ चतुःसहस्रे त्रिशते इत्यपि पाठः ।

मध्वनाम्ना यतिरसौ सच्छास्त्राणि करिष्यति ।
निरसिष्यति पाषण्डान् दुःशास्त्राणि महामतिः ॥
स्थापयिष्यति सद्धर्मान्सच्छास्त्रं व्याकरिष्यति ।
श्रोष्यन्ति मुनयः सर्वे शुकाद्या देवरूपिणः ॥ इति ।

तथा स्कान्दे श्रीमुष्णमाहात्म्ये नवमेऽध्याये—

कलौ पाषण्डभूयिष्ठे धर्मलेशविवर्जिते ।
वैवस्वतेऽन्तरे प्राप्ते ह्यष्टाविंशयुगे कलौ ॥
त्रैपुरा भारते युद्धे निहता राक्षसा भुवि ।
यदा प्रवर्तयिष्यन्ति मार्गं पाषण्डगोचरम् ॥
तदा संप्रार्थितो देवैर्भगवान् हरिरीश्वरः ।
तत्कर्मकरणे दक्षं मातरिश्वानमादिशत् ॥
वायुस्तु यतिरूपेण जनिष्यति कलौ युगे ।
कृत्वा सच्छास्त्रसन्दर्भं स्थापयिष्यति सत्पथम् ॥
एवमेव महादेवि नारायणपरायणाः । इत्यादि ।

नन्वेवं केनचित्स्वमनीषया वैदिकविरुद्धमार्गान्तरं परिकल्प्य तत्र प्रमाणत्वेन स्वकल्पितवेदवाक्यमुदाहर्तुं शक्यम् इति सर्वधर्मादिव्यवस्था नष्टा स्यादिति चेन्न; अस्मदाचार्योदाहृतखिलश्रुतीनां प्रत्यक्षश्रुतिसमानार्थकत्वेनाविरोधितया व्यवस्थानाशासंभवात् । किंच पूर्वमीमांसायां तत्र तत्र "ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्या" इत्याद्याः खिलश्रुतय एवोदाहृताः । शंकरभाष्ये "अत एव चोपमा सूर्यकादिवत्" इति सूत्रे "यथा ह्ययं ज्योतिरात्मा विवस्वान्" इत्यादिखिलश्रुतिरुदाहृता । तथा रामानुजभाष्येऽपि "ज्योतिश्चरणाभिधानात्" इति सूत्रे "इन्द्रः शचीपतिर्बलेन पीडितः । दुश्च्यवनो वृषा समुत्सु सासहि" इति खिलैव चतुष्पात् गायत्र्युदाहृता । तथा

श्रीकण्ठभाष्येऽपि—"यश्च शिव इति वाचं वदेत् तेन सह संवसेत् तेन सह संवदेत् तेन सह भुञ्जीत" इत्यादिखिलश्रुतिरुदाहृता । स्वल्पखिलश्रुत्युदाहरणवद्बहुखिलश्रुत्युदाहरणस्याप्यदोषत्वात् । न ह्यस्मदाचार्यैः खिलश्रुतिभिरेव प्रक्रिया कल्पिता; किन्तु प्रसिद्धश्रुत्यनुसारिप्रक्रियायां स्वबहुज्ञत्वज्ञापनाय प्रसिद्धश्रुतिसमानार्थकखिलश्रुत्युदाहरणं कृतम् । एतेन संहितोदाहरणमपि व्याख्यातम् । एतेनाप्रसिद्धश्रुत्युदाहरणप्रसक्तानाप्तत्वशङ्कानिरासाय स्वयं वायोस्तृतीयोऽवतार इत्युद्घोष इत्यादिकं निरस्तम् । पुराणवचनैरेव परमाप्तताया अस्मदाचार्यस्योक्तत्वात् । शिष्यानुग्रहेच्छया स्वेन स्वमाहात्म्यवर्णनस्य न्याय्यत्वात् । अन्यथा—

को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ।

इत्यादौ भारतकर्तुर्व्यासस्य नारायणांशत्वं न सिद्ध्येत् ।

श्रीमध्वाचार्याणां वाय्ववतारत्वं तु ब्राह्मे क्षेत्रकाण्डे वेङ्कटमाहात्म्ये तृतीयेऽध्याये—

त्वं चापि गच्छ शैलेन्द्रं पूर्वं स्वर्णमुखीतटम् ।
यत्र ब्रह्मशिला नाम सर्वमध्ये[1]ऽवतिष्ठते ॥
अगस्त्यतपसः पश्चात् गयासांनिध्यमत्र वै ।
पादा ईशानविष्णवादिदेवानां तत्र सन्ति हि ॥
यतिरूपो मातरिश्वा अष्टाविंशतिमे कलौ ।
अवतीर्य[2] वसत्यत्र मध्वनामा वरे विभो ॥
स वायुस्तपसा पुण्यप्रीत्या चागस्त्ययोगिनः ।

---

१ सरिन्मध्ये इत्यपि पाठः ।

२ यजन् स्वयंभुवंस्तत्र मध्वनामापरं विभुमित्यपि पाठः ।

तत्स्थापितालये पुण्ये चातुर्मास्यं करिष्यति ॥
शुकः श्रोष्यति सच्छास्त्रं पद्मतीर्थादिहागतः ।

इति प्रसिद्धपुराणवचनानुसारेण ऋग्वेदमन्त्रस्य तत्परत्वं युक्तम् ।

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।

इति स्मृतेः । एतेन प्रायेण हि तन्मते स्वमात्रहृदयारूढानि वचनान्येवोपजीवितानि न तु न्यायाः प्रदर्शिता इत्यादिकं निरस्तम् । पुराणवचनोपबृंहणतया तदनुसारेण वेदस्य व्याख्येयत्वात् । अत एव ब्रह्ममीमांसायां तत्र तत्र स्मृतेश्च 'अपि स्मर्यते' इत्यादिवचनान्युदाह्रियन्ते । अस्मदाचार्योदाहृतवचनानि स्वमात्रहृदयारूढानि इति वदन् कूपमण्डूक एव । अस्मदाचार्योदाहृतन्यायदार्ढ्यं पूर्वमीमांसास्वारस्यं च तात्पर्यचन्द्रिकावलोकिनां स्पष्टम् । एतेनासाधुभिरेव शब्दैर्व्यवहारः, श्लोकरचनायामन्वयासंभवो वृत्तान्यथाभावश्चेति निरस्तम्, श्रुतिस्मृतिपुराणाभ्यासपाटवेनाचार्यैः क्वचिदार्षप्रयोगैर्व्यवहृतत्वात् । श्रुतिस्मृतिगतच्छान्दसशब्दानुकरणेनादोषत्वाच्च । "त्रियंबकं संयमिनं ददर्श" इत्यादिषु कालिदासादेरपि तथा व्यवहारदर्शनाच्च । "न वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्याम्" इत्यादिश्रुत्या वृत्तान्यथाभावस्यादोषत्वोक्तेः । अन्वयासंभवोक्तिश्चाज्ञानादेव । सूत्रेष्विव भाष्येऽप्यनुषङ्गाध्याहारादिना विवक्षितान्वयस्य वक्तव्यत्वादिति ।

इति वनमालिदासकृते मध्वमुखालङ्कारे
सदसच्छास्त्रतत्प्रवर्तकनिर्णयः ।

——•❀•——

नन्विदमनुपपन्नम्, त्वन्मते सर्वत्र तत्तत्पूर्वपक्ष-सिद्धान्तानामनुपपन्नत्वात्। तत्र प्रथमाधिकरण-पूर्वपक्षस्तावदयुक्तः। तथा हि ब्रह्ममीमांसाशास्त्र-मिदमनारम्भणीयम्, निर्विषयत्वात्। न तावदस्य सविशेषं ब्रह्म विषयः, तत्र मानाभावात्। वेदान्तानां निर्विशेषजीवस्वरूपमात्रपरत्वात्। न च जीव एव ब्रह्मेति स एव विषयः, तस्य स्वप्रकाशत्वेन अह-मिति सर्वानुभवसिद्धत्वात्। निर्विशेषे च तत्र निरूप-णीयधर्माणामभावादिति। तत्र निर्विशेषजीवरूपस्य ब्रह्मणः श्रुत्यन्तनिरूप्यत्वमङ्गीकृत्य शास्त्रनिरूप्यत्वा-संभवपूर्वपक्षो गुरूणां प्रणतिपरम्पराया विषये महापुरुषे तच्छिष्योचितस्वप्रमाणानर्हत्ववादमनुकरोति।

प्रमाणशिखामणयो हि वेदान्ताः नितान्तमनधिगत-मर्थमन्विच्छन्ति। पौरुषेयाणि तु शास्त्राणि उपायान्तरे-णावगन्तुं शक्येष्वर्थेषु श्रोतृबुद्धिसौकर्यार्थं प्रवृत्तानि स्वोक्तमप्यर्थमविस्मरणार्थमाम्रेडयन्ति न तथाऽनाधिगता-र्थमन्विच्छन्ति। यदि वेदान्ता अपि स्वप्रकाशजीवस्वरूप-मात्रे कर्तृत्वभोक्तृत्वरहिते अकर्मकशेषे स्वातन्त्र्येण पर्य-वस्यन्ति तदा शास्त्रस्य पर्यवसाने काऽनुपपत्तिरिति चेन्न, अस्मद्ग्रन्थार्थानवबोधात्। न ह्यस्मत्पूर्वपक्षिणा वेदान्तानामनधिगतार्थकत्वं स्वीकृत्य मीमांसानारम्भ उच्यते। किन्त्वज्ञातविषयाभावादनुवादका वेदान्ता जपार्था वा पूर्वकाण्डस्य तु कर्मबोधकत्वमित्यनारभ्या ब्रह्ममीमांसेत्युच्यते। न च "स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायविधेर्निरर्थकवेदान्तांशे वैयर्थ्यमिति वाच्यम्; विषनिर्हरणमन्त्रवद्वेदान्ताध्ययनस्यापि सार्थक्यात्।

उक्तं हि चन्द्रिकायाम्—"सिद्धचैतन्यबोधने श्रुतेरनुवादकत्वं वायुक्षेपिष्ठादिवाक्यवद्विद्वाक्यवच्च न्यायप्राप्तत्वात्सद्यं वेदान्ताध्ययनं तु जपार्थमस्तु ।"

एवं च यथा—अर्थवादाधिकरणेऽपौरुषेयत्वेऽप्यर्थवादानामक्रियार्थत्वेन विध्येकवाक्यत्वाभावादानर्थक्यमिति भाट्टमते पूर्वपक्षः, प्रभाकरमते चार्थवादानां विध्येकवाक्यत्वात् । यतो वायुदेवताकं कर्म शीघ्रफलदमतोऽप्यनुष्ठेयमित्यादिहेतोः "वायुर्वै क्षेपिष्ठा" इत्याद्यर्थवादबोधितस्यार्थस्य रक्तपटन्यायेनोत्थाप्याकाङ्क्षया विधीनामपेक्षितत्वान्न निरपेक्षबोधकत्वरूपप्रामाण्यं चोदनानामिति पूर्वपक्षः । यथा च परमते शास्त्रयोनिसूत्रे कारणवाक्यमनुमानप्राप्तकारणत्वानुवादि, ईक्षत्यधिकरणे च सांख्यस्मृतिप्राप्तकारणत्वानुवादीति पूर्वपक्षः । तथेहापि स्वतःसिद्धप्रत्यगात्मानुवादका वेदान्ता न विचार्या इति पूर्वपक्ष इति । वेदान्तानामनधिगतार्थकत्वमङ्गीकृत्य त्वदीयपूर्वपक्षस्याप्यसंभव एव । कर्तृत्वभोक्तृत्वादिरहितं कर्माशेषभूतं चैतन्यं तु अस्मत्पूर्वपक्षिणा नोपेयत एव । प्रमाणशिखामणित्वं तु वेदान्तानामधिगतार्थपरत्वेऽपि यथार्थज्ञानजनकत्वेनाप्युपपन्नम् ।

ननु त्वन्मते मीमांसारम्भात्प्रागेव वेदान्तानां प्रामाण्यं सिद्धम् । तथा हि—विष्णुना नारायणरूपेण विस्तरेण कृतं पुनर्व्यासरूपेण च संक्षिप्तं ब्रह्मतर्काभिधानं शास्त्रम् । तच्च तर्कशास्त्रं मीमांसाशास्त्रस्याङ्गम् । इदं हि सर्वेषां कर्म ब्रह्मकाण्डरूपवेदानां सकलगुणपूर्णो भगवानेव मुख्यार्थ इति निर्णयाय प्रवृत्तम् । तत्रैवेतन्निर्णया-

र्थानां वेदानां तदर्थनिर्णायकानां प्रत्यक्षादीनामुपक्रमादीनां श्रुतिलिङ्गादीनां च स्वरूपप्रामाण्यतद्बलाबलनिर्णायकत्वेनैवैतस्यापेक्षितमिति तदुक्तमनुव्याख्याने—

प्रमाणन्यायमीमांसा क्रियते तर्कशास्त्रतः।
मानन्यायैस्तु तत्सिद्धैर्मीमांसामेयशोधनम् ॥
ब्रह्म तर्कं च भगवान् स एव कृतवान्प्रभुः।
पञ्चाशत्कोटिविस्ताराान्नारायणतनौ कृतात् ॥
उद्धृत्य पञ्चसाहस्रं कृतवान्बादरायणः ॥ इति।

एवं च यदि वेदान्तानामखण्डजीवस्वरूपपरत्वे मानान्तरसिद्धतत्स्वरूपानुवादमात्रपर्यवसायित्वेन प्रामाण्यं न निर्वहेत्तदा तन्निर्वाहाय तेषामुपक्रमादिस्वारस्यावगतमपि तद्विषयकत्वं परित्यज्य मानान्तरानधिगतसगुणब्रह्मविषयतैव पूर्वपक्षिणाप्यंगीकर्तव्या स्यात्। न हि सिद्धप्रामाण्यानां वेदवाक्यानामनधिगतार्थपर्यवसानविरोधे क्वचिदपि वाक्यस्वारस्यानुरोधोऽस्ति। "त्रेधा तण्डुलान् विभजेत्", "सृष्टीरुपदधाति" "कपालेषु श्रपयति" इत्यादिषु तत्तत्स्वारस्योपास्थितानप्यन्यतः प्राप्तिमतोऽर्थान्परित्यज्य लक्षणया प्रत्यक्षविध्यन्तरद्वाराकल्प्यविध्यन्तरद्वारा वाऽनधिगत एवार्थे पर्यवसानस्याङ्गीकृतत्वादिति चेन्न, अनवबोधात् तथा हि अज्ञातमेयाभावात्प्रधानभूतस्य मीमांसाशास्त्रस्यानारम्भं ब्रुवता पूर्वपक्षिणैतदङ्गतर्कशास्त्रानारम्भस्य सुतरां वाच्यत्वात्। न हि मेयशोधकमीमांसानैरपेक्ष्येणैतदपेक्षितन्यायादिसमर्पकतर्कशास्त्रेणानधिगतार्थकत्वरूपं प्रामाण्यं वेदान्तानां सिद्धम्। किंच ब्रह्मतर्केण वेदान्तानां याथा-

र्थ्यादिलक्षणप्रामाण्यस्य सिद्धावपि मीमांसारंभबीजस्यानधिगतार्थकत्वरूपप्रामाण्यस्यासिद्धेः । एवं चेत्याद्ययुक्तम्, अस्मत्पूर्वपक्षिणा वेदान्तानामनधिगतार्थकत्वरूपप्रामाण्यानङ्गीकारात् । सगुणे ब्रह्मणि मानाभावेन तत्परतया सार्थक्यासंभवात् । वस्तुतस्तु शब्दमात्रतात्पर्यनिर्णयस्य ब्रह्ममीमांसाधीनत्वान्न ब्रह्मतर्केण वेदान्तानां किमपि प्रामाण्यं मीमांसारम्भात्प्राक् सिद्धम् । मीमांसाङ्गत्वं च तदपेक्षितयत्किंचिन्न्यायादिव्युत्पादकत्वेनाप्युपपन्नम् । किंचानधिगतार्थकत्वरूपप्रामाण्यं ह्यज्ञातविषयबोधकेनैव वेदान्तानां प्रतिपाद्यम् । अज्ञातो विषयस्त्वनन्तगुणालयो हरिरेव । न च स ब्रह्मतर्केण बोध्यते । न वा मीमांसां विना तदुपबृंहितवेदान्तैर्बोध्यते । बोधने च मीमांसावैयर्थ्यापत्तिः । अत एव न हीत्याद्यपि निरस्तम् । "अयमात्मा ब्रह्म" इत्यादिवाक्यस्वारस्यानुरोधस्यैव सिद्धप्रामाण्यानामपि वेदवाक्यानामनधिगतार्थपर्यवसाने विरोधिनः सत्त्वात् । "त्रेधा तण्डुलान्" इत्यादिषु स्वरसोपस्थितमानान्तरप्राप्तं परित्यज्य लक्षणादिनाऽनधिगतार्थपर्यवसाने विरोधिनोऽसत्त्वात् ।

ननु त्वन्मते साक्षी सर्वप्रमाणाधिकः, नित्यत्वेनाप्रामाण्यहेतुदोषजन्यत्वाभावात् । साक्षिविषये सुखदुःखेच्छाद्वेषादौ संशयविपर्ययोरदर्शनाच्च । दूरसंजातजलादिज्ञानप्रामाण्यपरीक्षाधारायामन्ततो जलावगाहनादिप्रयुक्तसुखादिग्राहकं साक्षिणमासाद्यैव विश्रान्तेश्च । अतः साक्ष्यनुभवविरुद्धेऽर्थे श्रुतिरपि न प्रमाणम् । साक्षिणो बलवत्त्वं च तव ब्रह्मतर्क एव सिद्धम् । अतोऽत्र साक्ष्यनुभवविरुद्धं वेदान्तानां सुखदुःखादिरहित-

निर्विशेषजीवस्वरूपमात्रपरत्वमपेक्ष्य पूर्वपक्षो न युज्यते इति चेन्न अनवबोधात्। तथा हि—साक्षिणा सुखदुःखादिविशिष्टं गृह्यते, श्रुत्या च धर्मिमात्रमित्याविरोधमवलम्ब्य पूर्वपक्षप्रवृत्तेः। न हि घटवद्भूतलमिदं भूतलमित्यनयोर्विरोधोऽस्ति। न वा वेदान्तानां दुःखादिनिखिलाभावविशिष्टजीवस्वरूपपरत्वमुपेत्यास्मत्पूर्वपक्षः प्रवृत्तः। निखिलाभावस्याप्रत्यक्षत्वेन पूर्वपक्षासंभवात्। वस्तुतस्तु प्रत्यक्षसिद्धविशेषातिरिक्तविशेषाभाव एव निर्विशेषपदार्थ इति न कोऽपि दोषः। ननु त्वदिष्टं प्रमाणबलाबलं ब्रह्मतर्क एव सिद्धम्, अतो वाक्यार्थनिर्णये प्रमाणानामुपक्रमादीनामुपक्रमादुपसंहारो बलीयानित्यादिरूपस्त्वदिष्टो मतान्तराविलक्षणबलाबलविभागोऽपि तत्रैव सिद्धः।

उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरम्।
श्रुत्यादौ पूर्वपूर्वं च ब्रह्मतर्कविनिर्णयात्॥

इत्यनुव्याख्यानोक्तेः। त्वदभिमतोपक्रमादिबलाबलानुसारी सर्ववेदानामर्थश्च त्वन्मते विचारात्प्रागेव गुरुमुखादवगन्तव्यः। यावच्छक्तिसकलवेदाध्ययनपूर्वकं प्रतिवाक्यमस्यायमर्थ इति सर्वेषां वेदवाक्यानां गुरुमुखादर्थग्रहणं श्रवणम्, तच्च यावदज्ञाननिवृत्ति सम्यगावर्तनीयम्। एवं श्रवणावृत्तिलब्धस्य वाक्यार्थग्रहणस्य स्थैर्यार्थं न्यायविचारात्मकं युक्त्यनुसंधानं मननम्। विचारशास्त्रं च मननविधिमूलकं न श्रवणविधिमूलकमिति हि त्वन्मतम्, तथा च निर्विशेषनिःप्रपञ्चजीवाभेदवाक्यानामपि सगुणसप्रपञ्चजीवभिन्नस्वाभिमतब्रह्मपरत्वम-

वबोधयतां स्वगुरूणां सकाशात् बहुधावर्तितश्रवण-लब्धवाक्यार्थनिर्धारणस्तदनुगुणप्रमाणस्वरूपतद्बलाब-लव्यवस्थापकब्रह्मविचारशास्त्रेतिकर्तव्यतर्कशास्त्राभ्या-सेन लब्धश्रवणसंवादस्तदनन्तरं तदर्थमननात्मके विचारे प्रवर्तमानः शिष्यः प्रत्यक्षादेः तर्कशास्त्राभ्यास-लब्धप्रमाणबलाबलस्याप्यनुगुणमर्थं त्यक्त्वा सर्ववेदा-न्तानां निर्विशेषजीवस्वरूपमात्रमेवार्थं इति सर्वविरुद्धं कथमाशङ्केत । आशङ्काभावे वा कथं पूर्वपक्ष इति चेदु-च्यते; यथाश्रुतवाक्यार्थग्रहणरूपश्रवणेन धर्म्यज्ञाननिवृ-त्तावपि मननिवर्तनीयायुक्तत्वादि शङ्काप्रयुक्तनिःप्रपञ्च-त्वादि कोटिकसंशयसंभवेन पूर्वपक्षसंभवात् । निर्विशे-षादिवाक्यानां सविशेषादिपरत्वस्य गुरुभिर्विचारं विना बोधयितुमशक्यत्वात् । विचारात्प्राक् श्रवणमात्रेण वाक्यार्थनिर्णयो ह्यसिद्धः । मीमांसानारम्भे तदङ्गब्रह्म-तर्काभ्यासस्यैवासंभवेन श्रवणसंवादोक्तेरयुक्तत्वात् । एतेन शिष्यस्य प्राक् अवगतार्थेन प्रतिबंधुमशक्यतयोदेतुं योग्याशङ्कैव हि वादकथारूपे शास्त्रे पूर्वपक्षो नाम अतो-ऽत्र प्राक् संजातेन श्रवणेनाङ्गविद्याभ्यासेन च प्रतिबन्धुं शक्या शङ्का नोदेतुमर्हतीति निरस्तम् ।

विचारात्प्राक् श्रवणवृत्तिजन्यधर्मिज्ञानस्य निःप्रपञ्च-त्वादि शङ्का विरोधित्वाभावात् । न्यायानुसन्धानरूप-मननात् प्राक् निर्णये मननवैयर्थ्यापत्तेश्च । न च संशय-साधारणज्ञानस्य साङ्गाध्ययनकाल एव संभवेन श्रवण-वैयर्थ्यम् साङ्गाध्ययनेनापि तत्तद्वेदैः पदवर्णस्वरादिना ब्रह्मापातप्रतीत्यनुदयेन तदर्थं श्रवणस्यावश्यकत्वात् । तदुक्तं न्यायामृते-"न हि कर्मकाण्डादिना ब्रह्मकाण्डेऽप्य-

वान्तरकारणादिवाक्येन पदवाक्यरूपाणां ब्रह्मधीरस्ती" ति श्रवणेन सर्ववेदानां वर्णस्वरपदवाक्यरूपाणां ब्रह्मपरत्वमापाततोऽवगतं न्यायानुसंधानरूपमनननामकविचारेण च निर्णय इति तत्त्वम् । ननु तथापि त्वत्पूर्वपक्षोऽनुपपन्नः । तथा हि सर्वेषां वेदान्तवाक्यानां निर्विशेषजीवस्वरूपपरत्वं प्रबलन्यायैः प्रतिष्ठापयच्छास्त्रमिष्यते न वा ? न चेत् प्रत्यक्षादिविरुद्धं सविशेषत्वादिविषयानेकावान्तरवाक्यकृतान्तःकलहप्रतिरुद्धं च तेषां तत्परत्वं न सिद्ध्येदिति तत्सिद्धिसापेक्षानारम्भपूर्वपक्षोत्थानं न स्यात् । इष्यते चेत्तदारंभमपेक्ष्य विषयाभावेन तदनारंभः समर्थ्यत इति व्याघातः स्यादिति चेन्न । अनारम्भे हि निर्विशेषजीवस्वरूपमात्रपरत्वं न हेतुर्येन शास्त्रारम्भानारंभाभ्यां व्याघातासिद्धी स्याताम् । किन्तु निर्विषयत्वमेव तत्र हेतुः । निर्विषयत्वं तु जीवस्य प्रत्यक्षसिद्धत्वात्, तद्भिन्नेश्वरे, प्रत्यक्षासिद्धजीवधर्मे च मानाभावात् । उक्तं हि न्यायसुधायां न तावदनात्मविषयेयं जिज्ञासा तस्य तृणादिलक्षणस्य प्रत्यक्षादिनैव निश्चितत्वात् धर्मादिलक्षणस्त्वनात्मा शास्त्रान्तरादिनैव निर्णीतः आत्मा तु शरीरेन्द्रियादिसंघातव्यतिरिक्तो नास्त्येव । शरीरादिकं च यथायथं प्रत्यक्षादिभिर्निर्णीतं नन्वात्मा शरीराद्यतिरिक्तोऽहमित्यसंदिग्धाविपर्यस्तसाक्षात्प्रतीत्यैव निश्चीयते इति चेत्, तर्हि तत एव न जिज्ञास्यः ।

अत एवानादितः तदीयतत्वज्ञाने विद्यमानेऽपीष्टानिष्टप्राप्तिपरिहारयोरदर्शनान्नासौ जिज्ञासितः कस्यचित्प्रयोजनस्येष्टे ईश्वरविषया जिज्ञासा भविष्यतीति चेन्न

तस्यैवाभावात् न चैवमीश्वरादिपदानामानर्थक्येनाप-दत्वप्रसंग इति वाच्यम्। तेषां कथंचिज्जीवविषय-त्वोपपत्तेः। सोऽपि हि स्वशरीरेन्द्रियादीनामीष्ट इति। एको लाघवाख्यो न्यायोऽस्मत्पूर्वपक्षिणाऽपि स्वीक्रियते। तेन प्रत्यक्षसिद्धजीवातिरिक्तचैतन्याभावसिद्ध्या ईश्व-रादिपदानां यथाकथंचिज्जीव एव पर्यवसानम्। उक्तं हि न्यायसुधायाम्–"प्रतीतार्थत्वोपपत्तावप्रतीतार्थकल्प-नायां गौरवप्रसंगात्" इति। प्रत्युत त्वदीयवाचस्प-तिविवरणपूर्वपक्षयोरेव व्याघातः। वाचस्पतिमते हि प्रत्यगात्मन एव ब्रह्मत्वात्तस्य चाहमिति प्रकाशमान-त्वात्तज्ज्ञानाय न शास्त्रमारंभणीयमिति पूर्वपक्षः। विव-रणमते तु प्रत्यग्ब्रह्मैक्यस्य विषयत्वेनाभिमतत्वात्प्रत्य-ग्ब्रह्मणोश्च विरुद्धस्वभावयोरैक्यासिद्धेस्तद्विचारार्थं शास्त्रं नारम्भणीयमिति पूर्वपक्षः। न च प्रत्यगात्मन एव ब्रह्मत्वं प्रत्यग्ब्रह्मणोरैक्यं च शास्त्रं विना सिद्ध्यति, येन व्याघातो न स्यात्।

ननु प्रत्यगात्मन एव ब्रह्मतया विषयत्वं प्रत्यक् ब्रह्मणोरैक्यस्य च विषयत्वं च सिद्धान्त्यभिमतमेवानूद्य तयोरेकस्य सिद्धत्वेनान्यस्यासिद्धत्वेन विषयत्वासंभवः इति तौ पूर्वपक्षौ प्रवृत्तौ तत्र कुतः प्रत्यगात्मैव ब्रह्मेति वा कुतः प्रत्यग्ब्रह्मणोरैक्यमिति वा पूर्वपक्षिणं प्रति सिद्धान्तिनो हेत्वाकाङ्क्षा न भवति। सिद्धान्त्यभि-मतस्यैव तयोर्विषयत्वस्य पूर्वपक्षिणाऽनूदितत्वात्। ततस्तत्र विषयोपपादकशास्त्रारम्भमनपेक्ष्य तदना-रम्भपूर्वपक्षप्रवृत्तेर्न व्याघात इति चेन्न, यदि शास्त्रं प्रत्यक्षसिद्धजीवब्रह्मैक्यादिपरं स्यात्तर्ह्यनारम्भणीयं

स्यात् । अनारम्भणीयं तु न भवति, अत उक्त्यैक्यादिपरं न भवतीति हि त्वदीयपूर्वपक्षः स्यात् । तथा चापाद्य-व्यतिरेकानिर्णयस्यापत्तिं प्रति हेतुत्वेन शास्त्रारम्भः पूर्वपक्षिणोऽप्यावश्यकः । तथा चासंगत एव पूर्वपक्षः । न ह्युक्त्यैक्यादिप्रतिपादनायेदमधिकरणं प्रवृत्तं येन तत्खण्ड-नाय पूर्वपक्षः प्रवर्तेत ।

एतेन त्वन्मते तु निर्विशेषजीवचिन्मात्ररूपं ब्रह्मेति सिद्धान्त्यनभिमत एवार्थे विषयत्वमापाद्य पूर्वपक्षप्रवृत्ति-रिति तस्मिन्नर्थे सिद्धान्तिनो हेत्वाकाङ्क्षोदयेन तदुप-पादकशास्त्रारम्भस्य त्वत्पूर्वपक्षिणापेक्षणीयत्वाद्व्या-घात इति निरस्तम्, निर्विशेषजीवचिन्मात्रपरत्वबोधक-शुष्कशास्त्राभ्युपगमेन प्रेक्षावदनुपादेयत्वरूपानारम्भपूर्व-पक्षप्रवृत्तेः । किन्त्वनारम्भे विषयाभावस्यैव हेतुत्वे-नोक्तेः । निर्विशेषजीवस्वरूपमात्रपरत्वस्य तत्र हेतु-त्वानुक्तेश्च । किं च सिद्धान्त्यनभिमतमर्थं स्वीकृत्य शास्त्रानारम्भपूर्वपक्षे तदुपपादनाय शास्त्रारम्भोऽपेक्षित इति व्याघातश्चेत्पूर्वमीमांसाद्यधिकरणपूर्वपक्षेऽपि व्या-घातः स्यात् । स खल्वेवं प्रवृत्तः—अध्ययनविधिना विश्व-जिन्न्यायाद्वेदाध्ययनस्य स्वर्गार्थताऽवबोधकेनार्थज्ञानेतर-फलार्थं नीयमानानां वेदानां विषनिर्हरणमन्त्राणामि-वार्थविवक्षाग्राहकं प्रमाणं नास्तीति वेदवाक्यान्यापाततो परिपूर्णानुपपन्नार्थानि लक्षणानुषङ्गाध्याहारव्यवधा-रणकल्पनार्थिकार्थकल्पनादिभिरवश्यमुपपादनीयानीत्यत्र नियामकाभावादनुपपत्तिशङ्काकलुषितं वेदार्थविचारा-त्मकं शास्त्रं नारम्भणीयमिति तत्रापि स्वाध्यायाध्य-यनस्य स्वर्गाद्यर्थत्वं सिद्धान्त्यनभिमतमेव पूर्वपक्षिणो-

पपाद्यमिति तदुपपादकविश्वजिन्न्यायादिप्रतिपादकशास्त्रारंभापेक्षाऽस्त्येव ।

ननु धर्मजिज्ञासासूत्रेऽध्ययनवाक्यमेकमेव विचार्यम् तस्य सिद्धान्त्यभिमतदृष्टफलरूपार्थज्ञानार्थत्वे वैयर्थ्यप्रसंगात्सर्वापेक्षितस्वर्गार्थत्वं वाच्यमिति शंक्यम् पूर्वपक्ष एव किंचिन्न्यायोपपादनमिति तदर्थं न शास्त्रारम्भापेक्षेति चेन्न, अध्ययनविधिद्वारा तदुपात्तानां सर्वेषामेव वाक्यानां विचार्यत्वेन शास्त्रारम्भापेक्षावश्यकत्वात् । ननु तेषां वाक्यानामविवक्षितार्थत्वे पूर्वपक्षिणोपपादनीये विषनिर्हरणादिमन्त्रवदन्यार्थं नीयमानत्वमेक एव न्यायः । सोऽपि पूर्वपक्ष एव व्युत्पादयितुं शक्य इति तदर्थमपि न शास्त्रारम्भापेक्षा । न हि कियन्तमपि न्यायमप्रदर्श्य पूर्वपक्षः क्रियत इति चेन्न, अस्माकमपि लाघवाख्यन्यायेनेश्वराभावसिद्ध्या जीव एव शास्त्रपर्यवसानेन तस्य प्रत्यक्षसिद्धत्वादनारभ्यं शास्त्रमिति पूर्वपक्षसंभवात् ।

एतेन त्वन्मते नैकमेव वेदान्तवाक्यं विषयः, तस्यैकस्य केनचिन्न्यायेन पूर्वपक्ष एव व्युत्पादितेन निर्विशेषचिन्मात्रपरत्वसिद्धावपि वाक्यान्तराणां सगुणब्रह्मपरत्वानिवारणेन तद्विचारार्थं शास्त्रस्यारभ्यत्वप्रसंगात् । अतः पूर्वपक्षिणा सर्वेषामेव वेदान्तानां निर्विशेषचिन्मात्रपरत्वव्यवस्थापनेन सिद्धान्त्यभिमते सगुणब्रह्मणि प्रमाणाभावात्तद्विचारार्थमपि शास्त्रं नारभ्यमिति वाच्यम् । त्वदभिमतं च न सर्वेषां वेदान्तानां निर्विशेषजीवचिन्मात्रपरत्वे सार्वत्रिक एको न्यायोऽस्ति, उपक्रमादीनां श्रुतिलिङ्गादीनां च परस्परबाध्यबाधकभावप्रकार-

शालिनां तत्र व्यवस्थापितत्वात्। न च तेषां सर्वेषामेकस्मिन्नेवात्र पूर्वपक्षे व्युत्पादनं युक्तम्, तथा सति सर्वस्यापि शास्त्रस्यैकाधिकरण्यकल्पनाप्रसंगात्। तस्मात्तावतां न्यायानां व्युत्पादकमेकं शास्त्रमिहापेक्षितमित्यत्रैव व्याघातो न धर्ममीमांसारम्भपूर्वपक्ष इति निरस्तम्। प्रत्यक्षाद्यप्रतीतेश्वराभावसाधकलाघवादि यत्किञ्चिन्न्यायस्यास्मत्पूर्वपक्षिणाऽप्यारभ्यत्वेन तेनेश्वरपरवाक्यानां यथा कथंचित्प्रत्यक्षसिद्धजीवपरत्वोपपत्तौ शास्त्रस्यारभ्यत्वात्। वेदान्तानां निर्विशेषचिन्मात्रपरत्वे एकस्य न्यायस्यासत्त्वेऽपीश्वराभावसिद्धौ जीव एव हि पर्यवसानम्।

न च त्वत्पूर्वपक्षिणोऽतीन्द्रियधर्मादिकमपि न सिद्ध्येदिति वाच्यम्, जीवभिन्नेश्वरे "अयमात्मा ब्रह्म" इत्यादीनां विरोधिनां वाक्यानामिव धर्मबोधकवाक्ये विरोधिनोऽसत्त्वात्। प्रत्युत त्वदीये वाचस्पतिपूर्वपक्षे प्रत्यगात्मन इदानीमहमिति प्रकाशमानरूपमध्यासपरिनिष्पन्नं तदिह न विचार्यम्। किं तु संसारदशायामनाविर्भूतं निर्विशेषं तस्य तात्त्विकरूपमस्ति श्रुतिप्रसिद्धम्, तद्विचारणाय च बहूनां निर्विशेषवाक्यानामभेदवाक्यानां चान्यपरत्वं वाच्यमिति तदुपपादकशास्त्रारम्भावश्यकत्वेन व्याघातः। न चैकयैव प्रत्यक्षादिविरोधयुक्त्या तेषामन्यपरत्वकल्पनेति वाच्यम्, अखण्डार्थकानामैक्यादिवाक्यानां धर्मिमात्रपरत्वेन प्रत्यक्षाद्यविरोधित्वात्। न हि धर्मिमात्रग्राहकमानस्य तत्राधिकधर्मादिबोधकेन मानेन न बाधोऽस्ति। अत ऐक्यादि-

वाक्यानां गत्यर्थं त्वत्पूर्वपक्षिणः शास्त्रारम्भापेक्षाऽस्त्येवेति सुस्थो व्याघातः।

ननु स्वप्रकाशस्यापि जीवस्य शास्त्रविषयत्वे च न काऽप्यनुपपत्तिः। सिद्धान्तेऽपि सत्यस्यानादेर्जीवाश्रितस्य तं प्रति तदीयानन्दादिकं ब्रह्मस्वरूपं तद्गुणगणादिकं चावृण्वतो मायाविद्याप्रकृत्यादिशब्दवाच्यद्रव्यरूपस्य ज्ञानविरोधिनो भावरूपस्याज्ञानस्य "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" "विश्वमायानिवृत्ति"रित्यादिवाक्यसिद्धस्येष्यमाणत्वात्। अन्यथा मुक्तिसंसारयोरविशेषः स्यात्। सिद्धान्ते हि नित्यज्ञानानन्दस्वरूप एव जीवः। विकाररूपाणां धर्माणां मुक्तावभावान्मुक्तौ पुरुषार्थरूपस्य नित्यानन्दप्रकाशस्येदानीमपि सत्त्वात्। अत ईश्वरापरोक्षज्ञानेनाज्ञाननिवृत्तौ प्राक् सत एवानन्दस्य बाल्येऽपि सतः पुंस्त्वादेर्यौवन इव मुक्तावभिव्यक्तिः। सुषुप्त्यादौ तत्सत्त्वेऽपि कामकर्मादिवृत्त्यभावादभिव्यक्तिः। तस्यानादित्वेन स्वोपादानगतोत्तरावस्थारूपनिवृत्त्यसंभवेऽपि प्रमाणसिद्धनिवर्तकोपनिपातबलात् स्वरूपप्रध्वंसरूपा निवृत्तिरिति सर्वोऽप्ययमर्थः पुंस्त्वाद्यधिकरणे स्थितः। अनिर्वचनीयत्वादिकं परं तस्य नेष्यते। तथा च यस्त्वया संसारदशायां प्रकाशमानस्यैव जीवस्य स्वरूपभूत आनन्दस्तदानीमावृत इष्यते, स एव श्रुतीनां जीवपरत्वपक्षेऽनधिगतो विषय इति न तस्मिन् पक्षे विषयाभावसिद्धिरिति चेन्न, नाहं पूर्णानन्द इति पूर्णानन्दत्वाभावग्राहकप्रत्यक्षेणायोग्यतानिर्णयादागमेन जीवे पूर्णानन्दत्वादिकस्य बोधयितुमशक्यत्वात्। यदीश्वराचिन्त्यशक्त्याऽना-

वृतस्यापि जीवस्यावृतत्वं सिद्धान्तिनोपेयते। तदीश्वरस्यैव लाघवादिना पूर्वपक्षिणा निराकृतत्वात्। प्रकाशमानस्यावरणासंभवाच्च। सुषुप्तावपि सुखरूपत्वमेवानुभूयते न तु पूर्णानन्दत्वादिकमपि पुंस्त्वाद्यधिकरणोक्तन्यायादिकमाच्छाद्य पूर्वपक्षोदयात्। न हि सिद्धान्तीयाः सर्वे न्यायाः पूर्वपक्षिणारभ्यन्ते। तथात्वे हि कुत्रापि शास्त्रे पूर्वपक्षोदयो न स्यात्।

ननु जीवतदानन्दयोरभेदेऽपि गुणगुणिभावनिर्वाहकस्य भेदप्रतिनिधेर्विशेषस्य सत्त्वात्स्वप्रकाशजीवस्वरूपानावरणेऽप्यानन्दस्यावरणं युक्तम्। अखण्डजीवपक्षे जीवतदानन्दयोर्विशेषाभावादयुक्तमित्यशुद्धम्। अखण्डपक्षे आविद्यामहिम्ना प्रकाशमानस्यैवाप्रकाशोपपत्तेः। सा ह्यघटघटनापटीयसी ब्रह्मशक्तिः, तस्यास्तादृशो महिमा नेष्यते चेत्सविशेषाभेदपक्षेऽप्ययं विरोधो दुष्परिहरः। न हि विशेषोऽस्तीत्येतावता तत्प्रकाशस्याविद्यावरणेन किंचिदपनीयते। घटस्य कुड्यावरणेन तत्संनिकर्षप्रतिबन्धवत्पटशौक्ल्यस्य महारजनावरणेन तज्ज्ञानप्रतिबन्धवच्चात्रानन्दस्य संनिकृष्टत्वप्रतिबन्धस्य तत्प्रकाशोत्पत्तिप्रतिबन्धस्य च वक्तुमशक्यत्वात्। नित्यस्य जीवचैतन्यस्यैव तत्प्रकाशतया तदुत्पत्तेस्तत्कारणेन्द्रियसंनिकर्षस्य चानपेक्षणात्। छत्राद्यावरणेनालोकस्य विषयसम्बन्धजीवचैतन्यस्यानन्दसंबन्धप्रतिबन्धस्यापि वक्तुमशक्यत्वाच्च तयोर्विषयविषयिभावसंबन्धस्यागन्तुकस्यासत्त्वात् स्वरूपाभिन्नधर्मत्वात्। न चानन्दजीवचैतन्ययोर्विषयविषयीभावः सदा शक्त्याऽऽत्मना स्थितोऽपि मुक्तौ व्यक्तात्मतापद्यत

इति तदानीमेवानन्दप्रकाशो न प्रागिति वाच्यम्। व्यक्तेरपि नित्यत्वाभ्युपगमे मुक्तौ जीवस्य सविकारत्वापत्तेर्नित्यानित्ययोः शक्तिव्यक्त्योर्भेदप्रसंगाच्चेति—

"न विशेषात्मता चेयमनित्या शक्तिरूपता।

सैव यत्सविशेषा स्याद्विशेषोऽन्यो न चाप्ययम्।"

इत्यनुव्याख्याने व्यक्तेः शक्त्यभिन्नत्वेनानित्यत्वनिषेधाच्च इदानीमप्यानन्दप्रकाशप्रयुक्तस्य स्वात्मनि प्रेम्णोऽनुभवाच्च। तस्मात्त्वद्रीत्या लोकानुभवेन जीवानन्दे प्रकाशमान एवाप्रकाशत्वं वाच्यम्। तच्चाविद्यामहिम्नैवोपपादनीयम्। तथैवोपपादितं च सुधायाम्—"अतः परमेश्वर एव सत्त्वादिगुणमय्याविद्याविरोधित्वेनाविद्यया स्वाधीनप्रकृत्याख्ययाऽचिन्त्ययाऽद्भुतया स्वशक्त्या जीवस्य स्वप्रकाशमपि स्वरूपचैतन्यमाच्छादयतीति युक्तम्"इति। तत्र विशेषोऽकिंचित्कर इति चेन्न, विशेषो हि वस्तुस्वभावरूपः, अतो न तेनाविद्याया अविद्यया वा तस्यान्यथासिद्धिः। अविद्या च सिद्धान्ते स्वीक्रियत एव। तामादाय त्वयाऽस्मत्पूर्वपक्षो दूष्यते, सिद्धान्तो वा? नाद्यः, प्रत्यक्षगृहीतातिरिक्तधर्मान् लाघवादनङ्गीकुर्वताऽस्मत्पूर्वपक्षिणा जीवे आवरणनिरासात्। सिद्धान्तन्यायानामनाच्छादने कुत्रापि पूर्वपक्षासंभवाच्च। अस्मत्सिद्धान्तयुक्त्या पूर्वपक्षखण्डनस्य त्वया वक्तुमनर्हत्वाच्च। जीवाभिन्नमीश्वरमनङ्गीकुर्वाणमस्मत्पूर्वपक्षिणं प्रति प्रकाशमानेऽपीश्वराचिन्त्यशक्त्यावरणोक्तेर्मोहमूलकत्वाच्च। नान्त्यः, सिद्धान्तोपपत्तेर्वक्ष्यमाणत्वात्।

यत्तु जीवस्य ब्रह्मणः सकाशान्मुख्यो भेदः सन्नपि ब्रह्मदर्शनं यदा निरोद्धुं न शक्नोति तदा जीवस्य

स्वानन्दाद्विशेषो भेदप्रतिनिधिः तद्दर्शनं निरोद्धुं न शक्नोतीति किं वाच्यम् ? न चाव्यक्तस्वभावत्वाद्ब्रह्मणस्तदप्रकाशोपपत्तिरिति वाच्यम्, तथा सति ब्रह्मणः प्रकाशप्रसक्त्यभावेन जीवाश्रितमज्ञानं ब्रह्मतद्धर्मविषयमानन्दपारतन्त्र्यादिस्वधर्मविषयं चेति कल्पनावैयर्थ्यप्रसंगात् । उपासनानन्तरभावेऽप्यप्रकाशापातेन मोक्षशास्त्रवैयर्थ्यप्रसंगाच्च । न चाव्यक्तस्वभावमपि ब्रह्मोपासनया प्रसन्नं सत् स्वशक्त्यैवापरोक्षीभवति । तच्चापरोक्षज्ञानमन्तःकरणवृत्तिरूपमिति तेनैव मोक्षः, अतः स्वरूपचैतन्यस्य कदाचिदपि ब्रह्म न विषय इति वाच्यम्, त्वया तदेव मे "यः पुत्रात्स यो वित्तात्" इति श्रुत्या ब्रह्म परमप्रेमास्पदतयोक्तमिति मुक्तौ स्वरूपानन्दानुभववत्तदनुभवस्यापि पुरुषार्थतयाङ्गीकारात् । मुक्तौ माहात्म्यग्रहणपूर्वकस्नेहरूपाया भक्तेरुपासनायाश्च त्वयाङ्गीकृतत्वाच्च । तस्मान्मुक्तौ स्वरूपचैतन्यातिरिक्तज्ञानाभावात्स्वरूपचैतन्यस्य च तदानीमागन्तुकविषविषयीभावासंभवादनादिकालमारभ्यैव ब्रह्मणस्तद्गुणगणस्य च मुक्तियोग्यानां स्वरूपचैतन्यप्रकाशनं वक्तव्यमेव । स्वीकृतं च तथा त्वया "स्थानविशेषात्प्रकाशादिवत्" इति सूत्रे । तत्र हि चतुर्मुखादिजीवानन्दानां ब्रह्मानन्दप्रतिबिम्बत्वेऽपि बिम्बावैचित्र्याद्वैचित्र्यानुपपत्तिमाशङ्क्य तत्तज्जीवगतानादिभक्त्यादिगुणवैचित्र्यात्तदानन्दानामनादिवैचित्र्यमुपपद्यते इत्युक्तम् । उदाहृतं च त्वया—

ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनामनादितः ।
ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रता ॥ इति ।

युक्तं चातीतानागतपदार्थानां तत्तत्कालानामव्याकृताकाशस्य तदंशानां व्यवहितानां प्राच्यादीनां दिशां मनसः परमाणूनां तदन्वयपरंपराणां च साक्षिप्रत्यक्षविषयत्वमङ्गीकुर्वतः तव ब्रह्मणस्तद्विषयत्वं न्याय्यम्। एवं ब्रह्मणस्तद्गुणानां च प्रकाशमानत्वेऽपि त्वयाऽस्य शास्त्रस्य निर्विषयत्वनिरासायाप्रकाशमानत्वमप्यविद्यामहिम्नैवोपपादनीयम्, तथैवोपपादितं च सुधायाम्—

"यद्यपि जीवचैतन्यं ब्रह्मस्वधर्मप्रकाशात्मकं तथापि परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहिताविद्यावशान्न तथा संसारे प्रकाशयतीति तत्तुच्छम्, ईश्वरतद्धर्मस्वपूर्णानन्दत्वादिविषयकज्ञानरूपो हि जीवः संसारदशायां न तत् प्रकाशयति संबन्धाभावात्। न हि स्वासंबद्धं ज्ञानं प्रकाशयति। न च स्वरूपातिरिक्तो विषयतादिसम्बंधी नास्त्येवेति वाच्यम्, नियमोपगृहीतवेदान्तश्रवणमनननिदिध्यासनादिजन्यस्वयोग्याशेष–भगवद्विशेषविषयकापरोक्षान्तःकरणवृत्तिप्रागभावध्वं–सस्यैव वृत्तितद्ध्वंसान्यतररूपस्येश्वरतद्धर्मजीवरूपज्ञानयोः संबन्धत्वस्वीकारात्। उक्तप्रागभावध्वंस एव हि नित्यस्येश्वरज्ञानादिविशेषस्य जीवपूर्णानन्दाच्छादकाविद्यानिवर्तकस्येश्वरमहाप्रसादस्य जीवे सम्बन्धः। ईश्वरमहाप्रसादेनैव जीवपूर्णानन्दत्वाच्छादकाविद्यानिवृत्तिः। सैव च जीवपूर्णानन्दत्वस्वरूपभूतज्ञानयोः सम्बन्धः यथा मायिनां वृत्तिश्चिदुपरागार्थेति मते व्यापकस्यापि चैतन्यस्य वृत्तिद्वारैव सम्बन्धः, यथा च तार्किकाणां सर्वगतस्य गोत्वादेः सास्नादिमत्येव सम्बन्धो न केशरादि-

मद्व्यक्तौ तथाऽस्माकमपि जीवस्वरूपज्ञानस्येश्वरप्रसाद-स्य चेश्वरे जीवे चोक्तवृत्तिप्रागभावध्वंसादिरेव सम्बन्ध-घटकः सम्बन्ध एव वास्तु; ईश्वरमहाप्रसाद एव जीवस्य मोक्षे हेतुः । "यमेवैष वृणुते तेन लभ्यः" इत्यादिश्रुतेः ।

"मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ।
तस्मिन्प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते ।
समाश्रिताद्ब्रह्मतरोरनन्तान्निःश्रेयसं पक्वफलं प्रयात ॥
एवं ज्ञातोहि भगवाननादिः पुरुषोत्तमः ।
प्रसीदत्यच्युतस्तस्मिन् प्रसन्ने क्लेशसंक्षयः ॥"

इत्यादिस्मृतेश्च न च "दृष्टैव तं मुच्यते" इत्यादि-श्रुत्या ज्ञानस्यैव मोचकत्वमिति वाच्यम्, दण्डेनैव घटः, शंखः पाण्डुर एवेत्यादिवदेवकारेण मोक्षे ज्ञाना-योगव्यवच्छेदबोधनात् । न च तावता प्रसादस्याहेतु-त्वम्, "व्रीहिभिर्यजेत" इत्यादौ पुरोडाशद्वारा व्रीहीणा-मिव प्रसादद्वारा ज्ञानस्यापि मोक्षहेतुत्वोपपत्तेः । तादृश-ज्ञानं तु विचारादिति कर्तव्यः शास्त्रविचार इत्यस्म-त्सिद्धान्तः । प्रागस्फुरन्तोऽपि षड्जादयो गान्धर्वशास्त्र-वासितश्रवणे स्फुरन्ति यथा तथा अव्यक्तस्वभावो भगवान् स्नेहपूर्वकश्रवणमनननिदिध्यासादिना वासिते मनसि प्रसन्नः सन्नपरोक्षो भवति । "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "मनसैवानुद्रष्टव्यं दृश्यते त्वग्र्या बुद्ध्या" इत्यादिश्रुतेः । "यन्मनसा न मनुते" इत्यादिश्रुतिस्त्वसंस्कृतमनोऽभिप्राया । अतो न मोक्षशास्त्रवैयर्थ्यम् । सुखस्वरूपजीवस्य सदा भानेऽपि तन्निष्ठपूर्णत्वम् शास्त्रविचारप्रयोज्यभगवदापरोक्ष्यहेतुक-प्रसादजन्याविद्याध्वंसे सत्येव भासते । ततः पूर्वं

स्वरूपभूतज्ञानस्य तत्संबन्धाभावात्। पूर्णत्वं च स्वप्रयोजकाविद्यावत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखत्वावच्छिन्ना—भाववत्त्वम्। अत एव स्वरूपचैतन्यस्य च तदानीमागन्तुकविषयविषयिभावाभावादित्यादिप्रलापोऽपि निरस्तः। स्वीकृतं चेत्यादिकं शोभते। ब्रह्मादिजीवानन्दानामीश्वरानन्दप्रतिबिम्बत्वं हि तदधीनत्वे सति तत्सदृशत्वम्। वैचित्र्यमपि तस्य स्वरूपत एव। स्वस्वयोग्यतानुसारेण साधनसम्पत्तिस्तया तारतम्येनैव स्वयोग्याशेषभगवद्विशेषापरोक्ष्यम्, तेन च तारतम्येनैव जीवेषु हरिप्रसादसम्बन्धस्तेन स्वभावतस्तारतम्ययुक्तानां जीवानन्दानामाविर्भावः। अनादिरपि स्वरूपाभूता भक्तिरुक्तान्तःकरणवृत्त्यैव आविर्भवति। बाह्यतत्त्वादिन्द्रियहीनानामपि दिक्कालादिव्यवहारेण दिक्कालादेः सदा साक्षिवेद्यत्वेऽपीश्वरस्य संसारदशायां साक्षिवेद्यत्वे मानाभावः। अन्यथा तत्र विप्रतिपत्तिर्न स्यात्। अविद्ययैव जीवस्य स्वपूर्णत्वादिधर्मैश्वरतद्धर्मेषु सम्बन्धविघटकतया संसारदशायामप्रकाशोत्पत्तावपीश्वराचिन्त्यशक्त्युपबृंहितेत्युक्तिस्त्वविद्यादिबन्धस्येशाधीनत्वसूचनायैव। एतेन परमते सविशेषानन्दस्येवात्यन्तभिन्नस्य ब्रह्मण इव चात्यन्ताभिन्नस्याखण्डानन्दस्य प्रकाशमानस्याप्यप्रकाशमानत्वमविद्यामहिम्नैव ममास्त्विति निरस्तम्। प्रकाशमाने आवरणस्यास्माभिरनङ्गीकारात्। भगवत्प्रसादरहितस्य स्वरूपज्ञानस्याविद्याऽविरोधित्वाच्च। न च मन्मतेऽपि वेदान्तजन्यवृत्तिरेवाज्ञानविरोधिनी। सा चेदानीं नास्तीति वाच्यम्, तस्याप्यधिष्ठा-

नापरोक्षत्वेनैव त्वयाज्ञानादिविरोधित्वस्य स्वीकार्यत्वात्। ब्रह्मणः सर्वप्रत्ययवेद्यत्वमङ्गीकुर्वतस्ते अधिष्ठानज्ञानस्य सदैव सत्त्वात्। वेदान्तजन्यज्ञानत्वेन निवर्तकत्वाङ्गीकारे द्वेषादिनिवर्त्येच्छादिवद्बन्धस्य सत्यत्वापत्तेः, दृष्टान्तासिद्धेश्च। न हि शुक्तिरूप्यादिकं तद्धेतुत्वज्ञानं वा वेदान्तजन्यवृत्तिनिवर्त्यम्। न च वेदान्तजन्यवृत्तेर्विशिष्टावगाहिन्या भ्रमरूपत्वेन नाज्ञानादिनिवर्तकत्वम्, भ्रमस्याप्यधिष्ठानांशेऽज्ञानविरोधित्वात्। न च ब्रह्मान्याविषयकं ब्रह्मज्ञानं तदज्ञाननिवर्तकमिति वाच्यम्, घटपटज्ञानेन घटाज्ञानस्य दण्डिपुरुषज्ञानेन पुरुषाज्ञानस्य च निवृत्त्यनापत्तेः (निवर्तकत्वानापत्तेः)।

ननु त्वदुक्तोऽर्थः क इति न जानामि दूरे जलमिव भासमानं किमिति न जानामीति प्रत्यक्षतः शब्दतश्चावगतमप्यर्थं साकल्येनानूद्य तत्रैव प्रश्नो ज्ञानानुभवश्च दृश्यते। अतो बाह्येऽपि विषये प्रकाशमानस्याप्रकाशमानत्वं प्रसिद्धमेवेति चेन्न, न जानामीत्यहमर्थनिष्ठतया प्रतीयमानस्य त्वन्मतेऽनादिभावरूपाज्ञानत्वासम्भवादहमर्थस्याज्ञानकल्पितत्वात्। साक्ष्यवेद्ये सुखदुःखाज्ञानादौ प्रातीतिके च भावरूपाज्ञानाभावेन सुखादिकं न जानामि शुक्तिरूप्यं न जानामीत्यादेर्ज्ञानाभावविषयत्वे त्वदुक्तमर्थं न जानामीत्यादेरपि तथात्वाच्च। अतः सामान्यतोऽज्ञातस्यापि विशेषत एवाज्ञानप्रश्नादिविषयत्वं वाच्यम्। अन्वयव्यतिरेकाभ्यां विशेषप्रश्ने सामान्यज्ञानमेव तन्त्रम्। विशेषाज्ञानानुभवे च सामान्यमेवावच्छेदकम्। न च सामान्यविशेषभावस्य व्याप्यव्यापकभावातिरिक्तस्याभावेनाज्ञातधूमस्यापि ज्ञात-

वह्निकस्य धूमप्रश्नप्रसङ्गो धूमाज्ञानस्य वह्निं न जानामीति वह्न्यवच्छेदेनानुभवप्रसंगश्चेति वाच्यम्, स्वरूपेणैवेतर-व्यावर्तकयोपरञ्जकतया वोपस्थितयोर्वस्तुतोऽव्याप्यव्या-पकयोः सामान्यविशेषत्वात्। वह्निधूमयोस्तु वह्नित्व-धूमत्वेनोपस्थितत्वेन सामान्यादिव्यवहाराभावात्। न च न हि घटवान् प्रमेयवानित्यत्र घटप्रमेययोः, घटत्ववान् प्रमेयत्ववानित्यत्र घटत्वप्रमेयत्वयोश्च सामान्यविशेष-भावोऽस्ति।

ननु अनुमितिहेतुज्ञानविषयव्याप्तिप्रश्नादिस्थले विशि-ष्य त्वदभिमतसकलविशेषणविशिष्टं व्याप्यादिकं जानत एव प्रश्नार्थं तदप्रकाशस्त्वयाऽवश्यं वाच्यः, अन्यथा प्रष्टुस्तदवगमाभावे तस्य प्राक्तनवह्न्याद्यनु-मानविलोपः स्यात्तदवगमं विनापि तदा तस्यानुमित्य-ङ्गीकारे तत्रैव व्यभिचारेण त्वदभिमतव्याप्तिज्ञानस्या-नुमितिकरणत्वं न स्यादिति चेन्न, अशेषं जानतः प्रश्न-स्यालीकत्वात्। लक्ष्यविशेषनिष्ठतया व्याप्त्यादिकं जानतोऽपि लक्ष्यान्तरनिष्ठत्वस्यैवाज्ञातस्य हि प्रश्नविषय-त्वं यन्निष्ठतया सकलविशेषणविशिष्टं व्याप्त्यादिकं गृह्णाति। तत्र प्रश्नस्यालीकत्वाच्च। एवं दूरे जलमि-वाभासमानं किमिति न जानामीत्यत्रापि न ज्ञातस्या-ज्ञानविषयत्वं पुरोवर्तिनि जलस्वरूपे भासमाने हि नाज्ञा-नप्रश्नादिकं तन्निष्ठफेनबुद्बुदतरंगाद्यसाधारणधर्माज्ञानेन प्रश्नाद्युपपत्तिः। एतेनास्मिन् ज्योतिर्मण्डले कश्चन्द्र इत्यादिश्चक्षुषा चन्द्रमण्डलादिकं पश्यत एव प्रश्नोऽपि चक्षुर्गम्यचन्द्रत्वधर्मस्योपदेशात् प्राक्चन्द्रनिष्ठत्वेना-ज्ञानात्। किं चास्मन्मते अज्ञानस्य सत्यत्वात्तेनेशातद्‌-

मेजीवपूर्णानन्दत्वाभानं जीवस्य युक्तम् । त्वन्मते ज्ञानस्य मृषात्वान्न युक्तम् । न चापवरके प्रविशता पुंसा तदानीं कल्पितस्य तमसस्तदप्रकाशोपपादकत्वं दृष्टमिति वाच्यम्, विद्युदादितेजसेव सौरादितेजसा चक्षुषः प्रतिहतत्वात्पुनः समाधानात्प्रागप्रकाशोपपत्त्या मृषान्धकारे मानाभावात् । न हि रोगाद्युपहतचक्षुषा रूपाद्यदर्शने कल्पितोऽन्धकारोऽस्ति । यत्त्वेवं निर्गुणस्यानधिगतत्वेन विचार्यत्वेऽपि यदि तत्र विचिकित्सा तर्हि सगुणब्रह्मविषयतयैव त्वत्पूर्वपक्षिणा शास्त्रमारभ्यामिति, तन्न, जीवातिरिक्ते ब्रह्मणि मानाभावस्योक्तत्वात् । एवं हि जीवस्यैव ब्रह्मत्वे जीवब्रह्मणोरैक्ये वा प्रत्यक्षसिद्धे शास्त्रारम्भासम्भवे जीवभिन्नानन्तगुणेश्वराविषयतया त्वत्पूर्वपक्षिणाऽपि शास्त्रमारभ्यं स्यात् ।

जीवभिन्नेश्वरे मानं पूर्वपक्षे च नास्ति नः ।
अज्ञातविषयाभावान्नारभ्यं मननं ततः ॥

अतोऽज्ञातविषयाभावादनारभ्यं शास्त्रमिति प्राप्ते ताद्विजिज्ञासस्व तद्ब्रह्मेति जिज्ञास्ये वस्तुनि श्रूयमाणो ब्रह्मशब्दः प्रत्यक्षसिद्धादल्पगुणाज्जीवात्पूर्णानन्तगुणं विषयं बोधयति । सार्वज्ञाद्यनन्तगुणबोधकवाक्यानां जीवेऽन्वयासंभवेन तैरपि जीवभिन्नेश्वरासिद्धिः ।

अत्र वदन्ति—सर्वेषां वेदान्तानां सजातीयविजातीयस्वगतभेदशून्ये निर्विशेषे जीवरूपे ब्रह्मणि तात्पर्यं स्वीकृत्य प्रवृत्तस्य पूर्वपक्षस्य निरासाय सर्ववेदान्तप्रतिभटत्वेन विचारविधिवाक्यगतब्रह्मशब्दस्त्वया स्थापितः । न चायं गुणपूर्तिनिमित्तः सन्नपि सर्वानपि वेदान्तानुपक्रमादिन्यायनिर्णीताद्वैततात्पर्यात्प्रच्यावयितुं शक्तः,

प्रत्युत स्वयमेव तद्गुणभूतत्वात्तदनुगुणमेवाद्वैतवाद्यभिमतात्रिविधपरिच्छेदराहित्यरूपमर्थमावेदयेत् । दर्शितश्चायं न्यायस्त्वयाऽपि "न स्थानतोऽपि" इति सूत्रे—

तत्र हि—कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यतः ॥

इत्यादिश्रुतिवाक्याद्विश्वतैजसप्राज्ञादिरूपस्येशस्यापि बद्धत्वादिदोषोऽस्त्वित्याशङ्क्योक्तमनुव्याख्याने—

सर्वत्राशेषदोषोज्झपूर्णकल्याणचिद्गुणः ।
तद्विरुद्धं तु यत्तत्र मानं नैव भवेत्क्वचित् ।
महातात्पर्यरोधे तु कथं तन्मानमत्र तु ॥ इति ।

सुधायां चोक्तम्—सकलश्रुतिस्मृतीतिहासपुराणानां परमेश्वरस्याशेषदोषविधुरत्वे समस्तगुणपरिपूर्णत्वे च यत् महातात्पर्यं तद्विरोधेन तद्वाक्यमत्र भगवतो दोषित्वादौ कथं मानं भवेत्? दृष्टं हि निर्णीतमहावाक्यविरुद्धस्य तदवान्तरवाक्यस्य तत्राप्रामाण्यं यथा स्वर्गप्रयोजनाग्निहोत्रपरमहावाक्यार्थविरुद्धस्य "यद्यमुष्मिन् लोकेऽस्ति वा न वा" इत्यादेस्तदवान्तरवाक्यस्य 'महावाक्यं हि प्रधानमनन्यार्थत्वात्, अप्रधानं त्ववान्तरवाक्यं तदर्थप्रतिपत्तिहेतुत्वात्' इति । तस्मादिहाद्वैतिदर्शितोपक्रमादिभिर्न्यायैः सर्ववेदान्तानां सगुणे ब्रह्मणि महातात्पर्यं प्रसाध्यते चेदेवं कृतपूर्वपक्षनिरासो भवेत्, न तु ब्रह्मशक्तिप्रदर्शनमात्रेणेति चेत्?

अत्रोच्यते—सजातीयादिराहित्यपरत्वमाश्रित्य नास्माकं पूर्वपक्षः प्रवृत्तः, किन्तु लाघवादिसहकृतम् "आत्मा ब्रह्म" इत्यादिकं वाक्यमाश्रित्य । तेन जीवभिन्नेश्वराभावे सिद्धे जीवस्य प्रत्यक्षत्वेनाज्ञातविषया

भावाच्छास्त्रानारम्भः पूर्वपक्षिणोक्तः । द्वितीयाभावादेः स्वरूपाभिन्नत्वे तस्य प्रत्यक्षासिद्धत्वेन तत्परशास्त्रस्यानारम्भोक्त्ययोगः स्वरूपाभिन्नत्वे गुणपूर्तिबोधकब्रह्मशब्दस्य सर्ववेदान्तप्रतिभटत्वोक्तिर्निरर्थिकैव । न हि धर्मिमात्रबोधकमानस्य तन्निष्ठधर्मबोधकमानेन सह मात्रयाऽपि विरोधोऽस्ति । मुमुक्षुज्ञेयगुणपूर्तिवाचकब्रह्मादिशब्दानां गौणत्वासंभवात् । तस्मादिहेति शोभते । प्रबलतरन्यायैरेव सगुणे ब्रह्मणि समन्वयप्रतिपादनात् । किं च जीवातिरिक्ते ब्रह्मणि प्रमाणं नास्तीति प्रत्यवतिष्ठमानं पूर्वपक्षिणं प्रति तत्र प्रमाणतयोपन्यस्तं ब्रह्मपदं तस्याज्ञातस्य ज्ञापकमुत्पत्तिवाक्यस्थानीयमिति तत्प्रतिपादितं गुणपूर्णत्वविशिष्टं तेन जीवातिरिक्ते ब्रह्मणि सिद्धे वेदान्तेषु सर्वैरपि ब्रह्मप्रकरणैस्तत्रैव वर्तितव्यमिति तत्प्रतिपादितानि निर्गुणत्वजीवाभिन्नत्वादीन्युत्पन्नशिष्टानि अत उत्पत्तिशिष्टप्राबल्यमर्यादया ब्रह्मादिपदस्य सर्ववेदान्तेभ्यः प्राबल्यम् ।

ननु स्यादेवं यदि "तद्ब्रह्म" इत्यत्रत्यं ब्रह्मपदमज्ञातस्य ब्रह्मणो ज्ञापकं स्यात्; नत्वेवम्, तस्य "यतो वा इमानि" इति यदुपबन्धबलेन जगत्कारणतया सहप्राप्तस्य धर्मिणोऽनुवादकत्वोपगमात् । ततश्च "सदेव सौम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादि कारणवाक्यमेव तत्प्रापकं वक्तव्यम् । तत्र च सजातीयविजातीयस्वगतभेदनिषेधः स्वरसतः प्रतीयत इति स एवोत्पत्तिशिष्टो न तु गुणपूर्णत्वमिति विपरीतमेव बलाबलमिति चेन्न, जिज्ञास्यत्वज्ञेयत्वाद्यर्थं ब्रह्मपदेन गुणपूर्तिविधानात् ।

अन्यथा "यतो वा" इत्यादिवाक्यस्य वैयर्थ्यापत्तेः, "यदुपबन्धबलेन" इत्युक्तिस्तु तुच्छैव, "अधीहि भगवो ब्रह्म" इति ब्रह्मप्रश्नोत्तरस्य "यतो वा" इत्यादिवाक्यस्य यदुपबन्धेऽप्यज्ञातब्रह्मबोधकत्वावश्यकत्वेन "यदाग्नेयोऽष्टाकपालो भवति" इत्यादिवदुत्पत्तिशिष्टत्वात्। किंच "यतो वा" इत्यादौ विश्वोदयादिकर्तुरेव हि यत्पदेन तत्कर्तृत्वप्रसिद्धिरेव द्योत्यते । न तु ब्रह्मपदार्थस्य ब्रह्मपदसमभिव्याहाराभावात् । न हि त्रितयकर्तृत्वमात्रं ब्रह्मपदार्थः । किंतु गुणपूर्तिरेव । न च त्रितयकर्तृत्वान्यथानुपपत्त्या गुणपूर्तिराक्षेप्तव्या, सार्वज्ञ्यचिकीर्षाकृतिमत्त्वादेरेव तदुपपादकस्याक्षेपात् सजातीयादिभेदनिषेधस्य ब्रह्माभिन्नत्वे गुणपूर्तिबोधविरोधाभावात् । भिन्नत्वे तेनैव सद्वितीयत्वापत्तेः । वेदान्तानामखण्डार्थकत्वहानेश्च अद्वितीयपदेनैव द्वितीयमात्रस्य निषेधकेन भेदत्रयनिषेधोपपत्तौ पदान्तरवैयर्थ्याच्च, कालादिद्वैतबोधकाग्रादिपदविरोधाच्च । अग्रे सृष्टेः प्रागिदं सर्वं सदेव निर्विकारमेवासीत्, एकं मुख्यमद्वितीयमसहायम् । एवकारो मुख्यत्वासहायत्वाद्ययोगव्यच्छेदपरः, विशेषणसंगतत्वात्; शंखः पाण्डुर एवेतिवत्, न हि विशेष्यब्रह्मसंगतोऽत्रैवकारोऽस्ति । येन पार्थ एव धनुर्धरः इतिवदन्ययोगो व्यवच्छिद्येत । किंच ब्रह्मपदं लक्ष्यार्थकमपि न लक्षणीभूतविश्वोदयादिहेतुत्ववद्व्यक्तिपरम्, किंतु लक्षणीभूतजगत्कारणत्वादिधर्मशून्यपरमित्यस्य व्याहतत्वेन यौगिकत्वेन प्रापकापेक्षाया असत्त्वेन भिन्नप्रकरणस्थं सदेवेत्यादिप्रापकं तत्र प्रतीतमद्वितीयत्वादिकं चोत्पत्तिशिष्टमित्यस्य व्याहतत्वात् ।

नन्वस्तु ब्रह्मपदमज्ञातज्ञापकम् तथापि नात्रोत्पत्तिशिष्टन्यायावतारः उत्पत्तिशिष्टमपि हि न भूरिबाधाय प्रभवति । अत एव "अग्नीषोमीयं पशुमालभेत" इत्युत्पत्तिवाक्ये देवतासंबन्धेन ज्ञातं पशोर्हविष्ट्वंपशुं विशास्ति हृदयस्याग्रेऽवद्यती"त्यादि हृदयादिहविष्ट्वबोधकानेकवाक्यविरोधात्त्यक्तम्, इह "बृहंतोह्यस्मिन्गुणाः" इति श्रुत्यन्तरं सहायमस्तीति तेन पशोर्हविष्ट्वेऽपि "जुष्टं देवानामिदमस्तु हव्यं" इति तदुपाकरणमन्त्रसहायकमस्ति । तथापि बह्ववदानवाक्यविरोधात्तद्धविष्ट्वं त्यक्तं चेद्गुणपूर्णत्वमप्यनेकाद्वैतवाक्यविरोधात्किमिति नत्याज्यमितिचेन्न, बहुतरसगुणसप्रपञ्चवाक्यान्तर्गतस्याद्वितीयादिपदस्यैवोपांशुयाजन्यायेन विष्णवादिवाक्यवत्पूर्वोत्तरानुसारेण व्याख्येयत्वात् । उक्तोदाहरणे अवदानवाक्यादेव हि पशोर्हविष्ट्वंत्यक्तं न तु बहुत्वात् । वेदत्वेनैवोभयोः प्रामाण्येन बहुत्वस्याकिञ्चित्करत्वात् । यद्यवदानबोधकमेकमेव वाक्यं स्यात्तथापि परम्परया सावकाशस्य पशुपदस्यार्थाद्धविष्ट्वंत्यक्तमेव स्यात्; अन्यथाऽवदानवाक्यवैयर्थ्यापत्तेः ।

योगेऽपि यत्पदस्य स्याद्यदाग्नेयकपालवत् ।
श्रुतित्वतो बलीयांसः प्रणवाद्याश्च वाक्यतः ॥२४॥

किञ्च ब्रह्मपदस्य श्रुतिरूपत्वेन निर्गुणत्वादि प्रतिपादकवाक्येभ्यः प्राबल्यम् । न च प्रथमोपस्थितिप्रयुक्तबलाद्बहुत्वप्रयुक्तबलस्यैवाधिक्यं विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्स्वधर्मत्वमिति न्यायादिति वाच्यम्, बहुत्वस्य वैपरीत्यात् । न हि ब्रह्मपदमात्रमेवास्मिन्नुप-

न्यस्यते, किन्तु गुणानन्त्यबोधका यावन्तः शब्दास्तदेकवाक्यतापन्नमेव ब्रह्मपदं तथात्वेनोपन्यस्यते। न च गुणबृहत्त्वस्य गुणिशब्दप्रवृत्तिनिमित्तत्वं न युक्तम्; अन्यथा रूपत्वरसत्वादीनि निमित्तीकृत्य घटेऽपि रूपादिशब्दप्रयोग इति वाच्यम्, बृहंतो ह्यस्मिन् गुणा इत्यादिना बृहद्गुणवत्त्वस्यैव ब्रह्मपदप्रवृत्तिनिमित्तताया बोधनात्। एतेनोक्तदोषाद्ब्रह्मशब्दो न गुणबृहत्वनिमित्तः, किन्तु परब्रह्मण्यद्वैत्यभिमतत्रिविधपरिच्छेदराहित्यनिमित्त एव। बृहंतो ह्यस्मिन्गुणा इत्यादिकं व्यावहारिकगुणविशिष्टसगुणब्रह्माणि कथं चित्स्तुतिपरतया नेयम्। अद्वैतिभिरपि "स्याच्चैकस्य ब्रह्मशब्दवत्" इति सूत्रे ब्रह्मशब्दस्य निर्गुण इव सगुणेऽपि वृत्तेरङ्गीकारादिति निरस्तम्। त्रिविधपरिच्छेदराहित्यस्य स्वरूपाभिन्नत्वे वेदान्तानां सखण्डार्थकत्वापत्तेः। अभिन्नत्वे स्वरूपस्याज्ञानाद्यधिष्ठानतयावान्तरवाक्येन च ज्ञानान्महावाक्यवैय्यर्थ्यापत्तेः त्रिविधपरिच्छेदराहित्ये ब्रह्मपदयोगरूढ्योरभावाच्च। सगुणनिर्गुणवाक्ययोर्व्यावहारिकपारमार्थिकनिषेधपरतयागतिकरणे हि ग्रहणं व्यावहारिकं अग्रहणं पारिमार्थिकमिति षोडशिग्रहणाग्रहणवाक्ययोरपि गतिः स्यात्, किन्तु।

सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः।

इत्यादिस्मृत्यनुसारान्निर्गुणवाक्यं प्राकृतगुणनिषेधपरम् अप्राकृतालौकिकगुणविधानपरं सगुणवाक्यम्।

वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने॥

यस्मिन्प्रयुज्यमाने तु गुणयोगः सुपुष्कलः ।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ॥

इति गारुडोक्तिविरोधेन निर्गुणब्रह्मवृत्त्युक्तेस्तुच्छत्वात् ।

नन्वीश्वरस्य गुणबृहत्त्वं नाम तद्गुणानामानन्दादीनां भूमानिरतिशयत्वरूप उत्कर्ष इति जीवब्रह्माभेदे तादृश-गुणवत्त्वं जीवे स्यात्तथैवानुभवश्च स्यात्तथा चाल्पगुण-तानुभवो न स्यात् इति हि विरोध उच्यते; स चायुक्तः, जीवानांमुक्तिसमयभोग्यानन्दज्ञानबलाद्युत्कर्षमङ्गी कृत्य त्वया तस्य संसारे किञ्चित्प्रकाशमानस्यापि सर्वात्मना प्रकाशे मुक्तिसंसारयोरविशेषः स्यादिति तत्परिहारार्थ-मविद्यावरणस्योपपादितत्वेन तत एवतास्मिन्परमेश्वर-गुणपूर्तिसत्त्वेपि तदननुभवस्याल्पगुणत्वानुभवस्य च सम्भवात्स्वकीयमुक्तियोग्यानन्दाद्युत्कर्ष एव पारमेश्वर-गुणभूमेति वक्तुं शक्यत्वाच्च । अविद्यावरणनिवृत्तिरूप-मुक्त्यनन्तरमपि हि केषाञ्चिपरमेश्वरापरोक्षज्ञानानन्तरं सत्कर्माननुष्ठानाविकर्मानुष्ठानदोषेण परमेश्वरेच्छावशा-त्स्वरूपानन्दस्य किञ्चिदनाभिव्यक्तिमङ्गीकुरुषे स्तुतयेऽनु-मतिर्वेत्यधिकरणे निरूपितत्वात् । पारमेश्वरस्यचानन्दा-दिभूम्नो निरतिशयस्वरूपस्याप्यतीतलक्षणानन्त्यवन्न्यू-नाधिक भाववदसङ्ख्य नानाविशेषशालिनः कश्चिद्-कश्चिद्विशेषएव मुक्तान्प्रति यथाधिकारंभासते इति विशेषान्तराणां पुरुषभेदेना नभिव्यक्तिभङ्गीकुरुष नाना-शब्दादिभेदादितिसूत्रे तथानिरूपितत्वात् पारमश्वेरस्य आनन्दादिभूम्नो जीवेऽपि सत्त्वे तस्य संसारदशायां विद्यमानेनाविद्यावरणेनाप्रकाशो काऽनुपपत्तिरितिचेन्न,

नित्यानावृतपूर्णानन्दादिगुणकेश्वरात् वास्तवभेदेनैव संसारदशायां जीवस्य पूर्णानन्दाद्यावरणोपपत्तावपि श्रुतिप्रतिपादितनित्यासंकुचितसार्वज्ञकेश्वराभेदस्वीकारे गुणपूर्त्यननुभवाल्पगुणतानुभवयोरनुपपत्तेः। न ह्यस्माभिः सदाऽनावृतपूर्णानन्देश्वराभेदं जीवे स्वीकृत्य पूर्णानन्दावरणं स्वीक्रियते, येन तद्वन्नित्यसर्वज्ञेश्वराभिन्नजीवे आवृतं सार्वज्ञ्यमापाद्येत। न च नाऽहं पूर्णानन्द इतिवन्नाहं सर्वज्ञो नाहमीश्वर इत्यादिप्रतीतेरपि भ्रान्तित्वेन नेश्वरभेदसाधकत्वमिति वाच्यम्, स्वरूपभूतज्ञानस्य संसारदशायां पूर्णानन्दादिविषयकत्वाभावात्। न च सार्वज्ञमपि नेदानीं सर्वविषयकम् एवं सति नाहं सर्वज्ञ इत्यादिज्ञानस्य भ्रान्तित्वोक्त्ययोगात्। ईश्वरज्ञानादौ भूमत्वं निरतिशयनित्यसर्वविषयकत्वादिकमेवेश्वरस्य बन्धमोक्षयोः शास्त्रविरुद्धत्वेन स्वीयेत्युक्तेस्तुच्छत्वात्। कर्माधिकारिणो दुष्कर्मादिनाऽऽनन्दानभिव्यक्तिसंभवेऽपि नित्यनिवृत्तसर्वकर्माधिकारतया श्रुतिसिद्धस्य स्वतन्त्रस्येश्वरस्यानन्दानभिव्यक्तेरसंभवात्। ईश्वरीयविशेषस्य तदयोग्यं जीवं प्रतिभानसामग्र्यभावेनाभानेपि निरतिशयसार्वज्ञस्य जीवे भानासंभवात्। अतो नाहं सर्वज्ञ इति प्रत्यक्षेणापि जीवेश्वरभेदसिद्धिः। अस्त्यन्यो भूतात्मा स ए वा एषोऽभिभूतः प्राकृतैर्गुणैरित्यथाभिभूतत्वात्संमूढः संमूढत्वादात्मस्थं प्रभुम्। भगवन्तंकारयितारं नापश्यदिति मैत्रायणीयश्रुतिविरोधापत्तेश्च। न चेयं भेदश्रुतिरनुवादिका, प्रत्यक्षस्य वर्तमानमात्रग्राहित्वेन श्रुत्या

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम्

इत्यादिस्मृत्युपबृंहितया त्रैकालिकभेद बोधनेनाननुवाद-कत्वात्। नन्वल्पगुणबहुगुणत्वरूपविरुद्धधर्मसमावेशेन जीवेश्वरभेदसिद्धिरिति त्वया वक्तुं न युक्तम्, त्वन्मते भगवत एकत्वानेकत्वशरीरित्वाशरीरित्वावयवत्वावयवित्वादिविरुद्धानेकधर्मसमावेशास्वीकारेण तद्वदज्ञत्वादेरप्यचिन्त्येश्वरशक्त्या समावेशोपपत्त्या विरुद्धधर्मेण भेदासिद्धेरिति चेन्न, अवतार्यवतारादिनैकत्वानेकत्वयोरप्राकृतशरीरप्राकृतशरीराभावयोरवयवावयिनोरभेदेनावयवित्वावयवत्वयोरेकत्र सर्वज्ञत्वासर्वज्ञत्ववदविरुद्धत्वात्, असार्वज्ञ्यवदविरोधोपपादकैश्वर्याविरोधित्वाच्च।

एतेन "नेह नाना" इत्यादि स्वगतभेदनिषेधश्रुतिबलादेव हरेरेकत्वानेकत्वादि विरुद्धधर्मसमावेशाय विशेषणमङ्गीकृत्यस्वयमेकोपिपरमेश्वरो विशेषबलादनेकमित्यादिकं कल्पयसि त्वंयथा, तथाजीवब्रह्मभेदनिषेधश्रुतिबलात्तयोर्विरुद्धधर्म समावेशाय भेदस्थाने विशेषमङ्गीकृत्य परमेश्वर एव विशेषबलाद्विविध जीवभावेन संसरतीति किमिति न कल्पयसि? ईश्वरभेद जीवेश्वरभेदनिषेध श्रुत्योर्विशेषाभावादिति निरस्तम्।

यत्र ह्यभेदे भेदानिषेधे बोध्यमानेन प्रबलप्रमाणविरोधो भेदव्यवहारश्च भवति, तत्र भेदप्रतिनिधिविशेषोऽङ्गीक्रियते। यत्र तु भेदनिषेधादिबोधे प्रबलमान विरोधस्तत्र भेद एव न तु विशेषः। अस्ति हि जीवभेदनिषेधादिबोधेनाहं सर्वज्ञो नाहमीश्वर इति साक्षिप्रत्यक्ष विरोधः। ननु त्वदङ्गीकृतो विशेषो व्यर्थः, ईश्वरशक्तेरेवविरोधभञ्जकत्वेनावश्यमङ्गीकार्यत्वात्। अन्यथा जीव-

स्य स्वतन्त्रकर्तृत्वे कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपोवा स्यादिति त्वदुक्तदूषणमलग्नं स्यात्। तथा हि यदि जीवः स्वतन्त्रकर्ता स्यात्तदा तस्य सिद्धान्ते तत्स्वरूपातिरिक्तकार्यानुसारितारतम्यवत्कृतिरूपगुणानङ्गीकारात्स्वयमेव प्रवृत्तिशक्तिरूपस्य तस्य तृणादानादिष्वपि कृत्स्नशक्त्या प्रवृत्तिः प्रसज्येतेत्यनुभवविरोधः। न चैकदेशेन प्रवृत्तिः, तस्य निरंशत्वात्; अन्यथा निरवयवत्वशब्दव्याकोपात्। न च व्यतिरेकोगन्धवदितिसूत्रेण सांशताया वक्ष्यमाणत्वेनांशानां बहुत्वेनांशविशेषैः। कार्यानुसारितारतम्येन तस्य कर्तृत्वोपपत्तिः। बहुत्वस्य भेदव्याप्तत्वेन भेदस्यापि प्रसक्त्याभिन्नांशराहित्यरूपनिरवयवत्वशब्दव्याकोपतादवस्थ्यात्। न च विशेषबलेन बहुत्वोपपत्तिः। भेदेनोपपादनीयस्यांशांशिबहुत्वस्य चेतने विशेषेणोपपादने घटाद्यचेतनेऽपि तस्य तेनैवोपपादनप्रसङ्गादिति दूषणान्तरं प्रदर्श्य तस्मादचिन्त्यशक्तिरीश्वर एव परस्परविरुद्धमप्यभेदमंशांशिकृतबहुत्वं च चेतनेषु विशेषेणैव निमित्तेन समावेश्याभेदेन निरवयवत्वशब्दव्याकोपबहुत्वेन कृत्स्नप्रसक्तिं च निराकृत्य कार्यानुरूपं जीवेन कारयतीत्यङ्गीकार्यम्। अत्रेश्वरशक्तिमनपेक्ष्य विशेषेणैवाभेदे बहुत्वयोर्विरुद्धयोः समावेश समर्थने कृत्स्नप्रसक्त्यादिदूषणंनलगेत्। तदपेक्षायां तु सैव पर्याप्ता किं विशेषेणेति चेन्न, वस्तुस्वभावपर्यवसन्नस्य विशेषस्य धर्मिग्राहक मानसिद्धस्येश्वरशक्त्या प्रतिक्षेपासंभवात्। न ह्यचिन्त्यशक्तिरपीश्वरः साधनान्तरमनपेक्ष्यैव किंचित्करोति कारयति वा, वैषम्याद्यापत्तेः। साधनान्तरमनपेक्ष्यापि

सर्वं कर्तुमकर्तुमन्यथाकर्तुं समर्थोऽपि न तत्करोति, कारुणिकत्वात्समत्वाच्च । अन्यथा प्रकृत्यदृष्टाद्यपेक्षापि न स्यात् । न च प्रकृत्यादौ श्रुतिरिव विशेषे मानं नास्ति, अनुपपत्त्यादेरेव मानत्वात् । एतेनैक एव विष्णुर्जाग्रदवस्थानियामकविश्वाख्येन रूपेण समग्रेणैवानेकत्र स्थितः । यथा नाना देशस्थितानशेषपुरुषान्प्रति सतताभिमुखेन समग्रेण रविस्तत्तदूर्ध्वं देशे स्थितः । नतु घटसंभृताम्भोवत्तत्तदक्षिस्थानस्थितस्वरूपतः शरीरतो वा भिन्नः, नापि बहुतृणाग्रप्रसारितपटवत्तत्तदधिकरणेष्वेकदेशेन स्थित इति त्वयाङ्गीकृतम् । तथाप्यणुरेव विष्णुः सर्वव्यापकश्च, सूक्ष्मतया दृश्यमान एव कृष्णस्य मुखे गर्भीकृतब्रह्माण्डत्वस्य यशोदाया दृष्टस्यैकेन दाम्ना बन्धनानुभवाच्च । सूक्ष्म एव तदुदरे बहूनामपि दाम्नां बन्धुमपर्याप्तत्वस्य चमहत्त्वलिङ्गस्य सत्त्वात् । "अणोरणीयान् महतो महीयान्"त्यादिश्रुतेश्चेत्यक्षराधिकरणे स्थापितम् । दहराधिकरणे च दहराकाशान्तःस्थस्य परिच्छिन्नस्यैवब्रह्माकाशस्य यावान्वाअयमाकाशस्तावानिति श्रुत्यर्थतया बहिर्ब्रह्माकाशवद्व्याप्तत्वं त्वयाऽङ्गीकृतम् । तत्रैव परिच्छिन्नस्य व्याप्तत्वासम्भवमाशङ्क्याऽन्यत्राप्येषमआत्माऽन्तर्हृदयेणीयान्व्रीहेर्वा यवाद्वाश्यामाकाद्वाश्यामाकतण्डुलाद्वेत्यणीयस्त्वेन श्रुतस्यैवान्तर्हृदयस्थितस्य ब्रह्माकाशस्यैषमआत्माऽन्तर्हृदयेज्यायान्पृथिव्याज्यायानन्तरिक्षाज्ज्यायान् दिवोज्यायानेभ्यो लोकेभ्य इति सर्वतो ज्यायस्त्वश्रवणात्तद्वदिहाप्युपपद्यत इत्युपपादितम् । अत्र सर्वत्रापि केवलं यस्येश्वरस्य स्वशक्त्यैवैकत्वप्रत्येकपर्या-

श्चानेकवृत्तित्वयोरणुत्वमहत्त्वयोश्च समावेश उपपाद्यः। न विशेषस्योपयोगोऽस्ति। विशेषो हि तव भेदप्रतिनिधिरेकस्यचानेकत्वमापाद्य धर्माधर्मावसाङ्कर्येण निवेशयेत्। न चात्र द्विविधेऽपि विरुद्धधर्मसमावेशोदाहरणेनैकत्वापादनमस्ति। अतः एतादृशस्थले त्वयाऽपि केवलमीश्वरशक्तिरेव निर्वाहकत्वेनाश्रिताऽतोऽन्यत्रापि सैवास्तीति विशेषो व्यर्थः। ईश्वर एकः सन्ननेकस्तनुमानवयवोऽवयवी चेत्यादिविरुद्धधर्मसमावेशस्यावश्यकेश्वरशक्त्यैव निर्वाह्योपपत्तेरिति निरस्तम्। उक्तोदाहरणेषु विशेषानङ्गीकारे क्षतेरभावेऽपि मानान्तरसिद्धभेदाभावे तत्प्रतिनिध्यनङ्गीकारे च भेदकार्यस्याकस्मिकत्वापत्तेः। न हि दृष्टसामग्र्यभावेऽदृष्टरूपयेश्वरशक्त्यैव कार्योत्पत्तिः। सर्वत्र दृष्टकारणापलापापत्तेः। ईश्वरशक्तिस्तु सविशेषनिर्विशेषसाधारण्येन कार्यनिर्वाहिका।

नन्वयं विशेषो नार्थसाधकत्वेन त्वयाऽङ्गीकार्यः, किन्तु यत्र भेदाभावेऽपि भेदाधीनो व्यवहारो दृश्यते, यथा लोके 'सुगन्धि महदुत्पलं' इत्यादौ, वेदे "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादौ च नीलगन्धादीनां ज्ञानानन्दादीनां च धर्मिणः परस्पराच्च भेदाभावे ऽप्यपर्यायशब्दैरुक्तिरित्यादिस्तन्मात्रं निर्वोढुं कल्प्यते। भेदाभावेऽपि तत्प्रतिनिधिना विशेषेणापर्यायशब्दप्रयोगादिकं निर्वर्त्यतेऽतो नाऽनेकत्वैकत्वादिविरुद्धधर्मसमावेशरूपार्थनिर्वाहः। यदि व्यवहारस्येव भेदाधीनस्यार्थस्यापि निर्वाहकोऽयमङ्गीक्रियते तदा गुणगुणिनां घटस्य नीलवर्णो ब्रह्मण आनन्द इत्यादि धर्मधर्मिभावव्यवहारमूलप्रतीतिगोचरसंबन्धोऽपि तद्विरोधिनि सत्यप्यभेदे

विशेषबलात्कल्प्येत सत्सु तन्तुषु पटाद्यसत्त्वनिर्वाहाय भेदश्च न कल्प्येत तन्तूनामवयवानां पटाद्यवयविनां चाभेदेऽपि विशेषबलादेव सत्वासत्त्वविरुद्धधर्मसमावेशोपपत्तेः । न चोभयत्रेष्टापत्तिः ।

अस्मत्पक्षे गुणाद्याश्च तद्वन्तो हि विशेषतः ।
अनन्यत्वान्नानवस्थाभेदो नाशे भवेत्तथा ॥

इत्यनुव्याख्यानविरोधात् । अत्र हि "तद्वन्तो हि विशेषतः" इत्यस्य व्याख्यानसमये 'भेदसम्बन्धकार्यकरो हि विशेषः' इति न्यायसुधायां तदभिप्रायो वर्णितः । तेन विशेषो यथा भेदस्य प्रतिनिधिः पटः शुक्ल इति सामानाधिकरण्यं भेदनिर्वाह्यं निर्वर्तयति तथा पटः शुक्ल गुणवानित्यादौ सम्बन्धप्रतिनिधिः सम्बन्धव्यवहारं निर्वर्तयतीति गुणगुण्यादिषु सम्बन्धानङ्गीकारः स्पष्टीकृतः । अत एव समवायनिराकरणस्थलेऽपि गुणगुण्यादीनां सम्बन्धो नास्तीति व्यवस्थापितम्, स्वाभिमतसम्बन्धान्तरं च नोक्तम् । ब्रह्मतद्धर्माणामभेदे धर्मधर्मिभावो न युक्त इत्याशङ्कापरिहाराय अहिकुण्डलाधिकरणे विशेष एव समर्थितो न तु तदधीनः कश्चन संबंध इति चेन्न, गुणगुणिनोः समवायानङ्गीकारेण संयोगासंभवेन च स्वरूपाभिन्नविशेषस्यैव तत्र सम्बन्धत्वात् । सति सोमे पूतीकानामिव सत्सु तन्तुषु पटासत्त्वोपपादकभेदे सति प्रतिनिधिविशेषस्यानङ्गीकारात् । न हि संभवति मुख्ये प्रतिनिधिरुपादातुमुचितः । आश्रयाश्रयिभाव एव धर्मधर्मिभावात्मा गुणगुण्यादीनां सम्बन्धः । न च तस्याद्विष्ठत्वात् सम्बन्धत्वानुपपत्तिः । अस्मन्मते संयोगस्याप्यद्विष्ठत्वात् । ननु त्वन्मते ययोरभेदस्तयोर्धर्मधर्मि-

त्वव्यवहारे सत्यपि वस्तुतः आश्रयाश्रयित्वं नोपेयते, अत एव अयं पटः एतत्तन्तुसंबद्धः एतदाश्रितत्वादेतदाश्रितरूपवदिति। समवायसाधकानुमानस्य तन्तुपटयोराश्रयाश्रयिभावासिद्धेरिति सुधायां स्वरूपासिद्धिरुक्ता; एवं च गुणगुण्यादीनां विशेषाधीनसम्बन्धान्तरसिद्धिप्रसंगोऽनिष्ट इति स्थितम्, तथा तन्तुपटादीनां भेदासिद्धिप्रसंगोऽप्यनिष्ट एवेति चेन्न, स्वरूपातिरिक्ताश्रयाश्रयित्वस्यैव सुधायामसिद्धेरुक्तत्वात् विशेषेणैव गुणगुण्यादिभावनिर्वाहे तदधीनसम्बन्धाङ्गीकारस्य निरर्थकत्वात्। प्रमाणेन भेदासिद्धौ विशेषानङ्गीकाराच्च। सत्सु तन्तुषु विनश्यतां पटादीनामभेदवद्भेदोऽप्यस्त्येव।

स्यादेतद्यथा भेदसाधकानां व्यपदेशभेदादीनां विशेषाश्रयणेनैवान्यथासिद्धिरुक्ता। तथा सति तस्मिन्नसत्त्वस्यापि विशेषेणैव निर्वाहः क्रियतां किं भेदाभ्युपगमेनेति चेन्न, विशेषस्य भेदकार्यव्यवहारमात्रनिर्वाहकत्वेनासत्त्वं प्रत्यनिर्वाहकत्वात्। सकलभेदकार्यकारित्वे विशेषो भेद एव न तु तत्प्रतिनिधिरित्याशङ्कासमाधानाभ्यां सुधायां स्पष्टम्। अतो यत्र भेदः सम्बन्धश्च प्रमाणसिद्धस्तत्र विशेषो नोपेयते। यत्र च तयोरभाव एव प्रमाणसिद्धस्तन्निमित्तककार्यं च जायते तत्र विशेष उपेयते। ईश्वरे च जीवस्य न सविशेषाभेदो न वा निर्विशेषाभेदः दुःखादिकलुषितत्वापत्तेः।

ननु दुःखादेरन्तःकरणोपादेयत्वेन जीवे दुःखाद्यभावात्कथं तदभिन्न ईश्वरो दुःखादिकलुषितः स्यात्? न च वृक्षोत्पन्नदण्डेन संयोगादिना पुरुषस्य दण्डित्वं क्षेत्रोत्पन्नधनेन स्वस्वामित्वसंबन्धेन पुरुषस्य धनित्वं यथा,

तथाऽन्तःकरणोत्पन्नदुःखेन स्वस्वामित्वसंबन्धेन जीवस्य दुःखित्वम् ईश्वरश्च तदभिन्नः स्यात्तर्हि दुःखी स्यादेवेति युक्तम् परमेश्वरएवान्तःकरणस्येन्द्रियवर्गस्य च स्वामी नान्य इति त्वयोपेयतेऽतस्तस्यैव दुःखादिकं स्यात् । ज्योतिराद्यधिष्ठानं तु तदामननादित्यधिकरणे करणानामीश्वरस्यैव स्वामित्वमङ्गीकृतं जीवकरणत्वव्यवहारस्तथाभिमानश्च स्वामिनः कुठारैस्तत्प्रेरितेषु भृत्येषु छिन्दत्सु तत्तद्भृत्यकुठारत्वव्यवहारदर्शनात्परकीयेऽपि बहुकालसंबंधिनि तदीयतोपचारदर्शनात्तथाभिमानदर्शनाच्चेति व्यवस्थापितत्वात् । स्वामिनः फलश्रुतेरित्यात्रेय इत्यधिकरणे मनुष्यादीनां स्वस्वेन्द्रियजन्यज्ञानकर्मास्वामित्वमुररीकृत्यैव सिद्धान्तप्रदर्शनाच्च ।

इत्थं हि तदधिकरणं ज्ञानकर्मादिफलमिन्द्रियप्रेरकदेवानामेव, तेषां हरिप्रसादलब्धतत्तदिन्द्रियजन्यज्ञानकर्मादिस्वामित्वात् लोके स्वामिन एव फलदर्शनाच्च । कर्मादेः क्षेत्रफलादर्शनात् । "यद्वु किं चेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति । यद्वु किंचेमाः प्रजा विजानते देवानां ह्येतद्भवति स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाणः" इति प्राप्ते अयजमानानामप्यृत्विजां सत्रयागफलमिवास्वामिनामपि कर्तॄणां ज्ञानकर्मफलमुपपद्यते; देवैस्तदर्थं कर्मादेः क्रियमाणत्वात् । यथा च गुरुणा शिष्यार्थमेव क्रियमाणस्य व्याख्यानस्य फलं गुरोरेव, शिष्याणां त्वल्पम् । यथा राज्ञा प्रजार्थं क्रियमाणस्य तत्पालनस्य राज्ञ एव प्रजावतो मुख्यं फलम्, प्रजानां तु तत्सहकारित्वमात्रत्वादल्पम् । अल्पफलत्वादेव प्रजानामफलत्वश्रुतिरिति चेन्न, अविद्यासहकृत-

स्वामित्वस्यैवाहं दुःखीत्यादिप्रतीतिनियामकत्वेना-
विद्यावतो जीवस्यैवाहं दुःखीत्यनुभव इति सिद्धान्ते
त्वत्प्रलापस्य निरर्थकत्वात्। ईश्वरस्य जीवन्मुक्तस्य च
दुःखादिस्वामित्वेऽप्यविद्याभावान्न दुःखाद्यनुभवः। ईश्व-
रस्य देवानां च स्वामित्वेऽपि जीवस्यापि स्वामित्वमस्त्येव
अस्वामित्वोक्तिस्त्वल्पस्वामित्वाभिप्रायात्। देवानां च
प्रजाज्ञानफलमाविर्भूतस्वसुखमेव, न तु जन्यम्, तत्सं-
बन्धनियामकाविद्याया निवृत्तत्वात्। अत एव तेषां न
प्रजाकर्मादिनिमित्तकदुःखानुभवः। अविद्यासहकृतस्वाश्र-
यसंयुक्तत्वं चाऽन्तःकरणोत्पन्नस्य दुःखादेर्जीवे संबन्धः।
तथा चेश्वरस्याविद्यावतो जी ाभेदे स्यादेव दुःखादि-
कलुषितत्वम्। न चाविद्यानिवृत्त्युत्तरमभेदः शङ्क्यः,
निर्विकारस्य द्रव्यस्यान्यस्यान्यात्मत्वासंभवात्। यथा
सत्रे ऋत्विजां यजमानत्वेऽपि यत्किंचिद्यजमानक्रिया-
कर्तृत्वाभावादयजमानता तथा स्वामिनामपि कर्तॄणां
मनुष्याणामस्वामिता न्याय्येति दृष्टान्तार्थं अयजमानानां
फलमित्युक्तिः साधुतमा। आर्त्विज्याधिकरणे स्वामित्व-
सामान्यं निषिध्यत इति ते भ्रमः, स्वातन्त्र्यस्यैव
निषेधात्। श्रवणगुरुप्रदानयोः प्रधानेतिकर्तव्यतारूपयो
र्गुरुप्रदानं प्रबलं नचेतिकर्तव्यतात्वेन दौर्बल्यं यज्ञिय-
हिंसायामितिकर्तव्यतायाः प्राबल्यदर्शनादित्यत्र प्राबल्य-
मवश्यानुष्ठेयत्वम्। "द्वादशाह वदुभयाविधं बादरायणोऽत"
इति सूत्रे द्वादशाहःक्रत्वात्मकः सत्रात्मकश्चेति भाष्यम्।
तत्र क्रतुपदमहीने लाक्षणिकम्। भूम्नः क्रतुवज्ज्यायस्त्वं
तथा च दर्शयतीति सूत्रे यथा दीक्षणीयोदयनीयसवन-
त्रयावभृथात्मकस्य क्रतोः सर्वाङ्गेष्वनुवर्तत एव साफल्य-

मन्यथा वैफल्यं ततो ज्यायस्त्वं ततश्च सर्वैः कर्तव्यत्वं तथा भूमत्वस्यापि सर्वत्रानन्दादिषु सहभावेनोपासन एवेष्टसिद्धेः। उपास्यानन्दादिविशेषणतया भूमत्वस्याज्यायस्त्वेऽपि सर्वोपासनानुगतत्वाद्युक्तं ज्यायस्त्वम्। दृश्यते हि। प्रायणीयादीनां ज्योतिष्टोमविकृतियागानुगतत्वेन ज्यायस्त्वमित्यर्थः। जिज्ञासासूत्रावयवस्याप्योंकारस्यासंहिततया पाठ उत्तरसूत्रेषूहार्थः। न चाग्रिमसूत्रेषु स्थानिनोऽभावादग्निस्थाने सूर्यस्येवात्रोहासंभवः। उह्यते इत्यूहस्तर्कः अनुषंगादिरिति हि तदर्थः। सुधायां ज्योतिषां स्तोमो हि ज्योतिष्टोम इत्यत्र ज्योतिषां स्तोमो यत्रेति शेषः। वृत्तिपदार्थमात्रप्रदर्शनपरतयान्यपदार्थाप्रदर्शनस्यादोषत्वात्। न च त्वद्ग्रन्थेषु सर्वत्रैवाऽन्यथाभावः। क्वाचित्कान्यथाभावे हि समाधानमुचितं न तु सार्वत्रिकान्यथाभावे। चन्द्रिकादौ सर्वत्र मीमांसकमर्यादयैव सम्यग्भाष्याभिप्रायस्य वर्णितत्वात्। तदुदाहृतविरोधस्य क्वाचित्कत्वेन समाधातुमुचितत्वात्।

ननु तन्मतमित्यन्यथाऽनुवादः, यथा—

अङ्गीकृतत्वादपि तैः पदार्थानां पृथक् पृथक्।
क्रियापदेनान्वयस्य वाक्यभेदाद्धि दूषणम्॥

इति सत्यज्ञानादिवाक्येषु ब्रह्मानुवादेन सत्यत्वाद्यनेकविधाने वाक्यभेदः स्यादिति शङ्काम्—

पृथगेव च वाक्यत्वं पृथगेवान्वयो भवेत्।
अवान्तरत्वाद्वाक्यानां वाक्यभेदो न दूषणम्॥

इत्यभ्युपगमेन परिहृत्य मीमांसकमतेपीदं समानमित्यनेन श्लोकेनोच्यत इति न्यायसुधायां व्याख्यातम्। तैर्मीमांसकैरपि “अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं

क्रीणाति" इत्यादावरुणादिपदानां क्रियापदेन पृथक्पृथगन्वयस्याङ्गीकृतत्वात्तेषामपि वाक्यभेदो दूषणं प्रसज्येत। तत्रैतावद्वक्तव्यम्; महावाक्यभेद एव दूषणं न त्ववान्तरवाक्यभेद इति तदस्माकमपि समानमिति तत्र न प्रसिद्धमीमांसकमतेऽवान्तरभेदः, क्रयभावनाया आरुण्याद्यनेकविशेषणविशिष्टाया विधेयत्वेनैकवाक्यताया एव तैः स्वीकृतत्वादिति चेन्न, विशिष्टविधिपक्षेऽपि भामत्युक्तरीत्या वाक्यभेदरूपदोषस्य दुर्वारतया मीमांसकैरपि पृथगन्वयस्याङ्गीकृतत्वादित्युक्तेस्तैरपि तथाङ्गीकर्तव्यमित्येतत्परत्वात्। इत्थं हि भामत्यां देवताधिकरणे विशिष्टविधिप्रतिबन्द्या देवताविग्रहादिसिद्धिरुपपादिता, तथा सति अनधिगतविग्रहादिप्रतिपादकवाक्यं भिद्येतेति चेत्? अथ भिन्नमेवैतद्वाक्यम्। तथा सति तात्पर्यभेदोऽपि इति चेन्न, द्वारतोऽपि तदवगतौ तात्पर्यान्तरकल्पनाया अयोगात्। न च यत्र यस्य न तात्पर्यं तत्र तस्याप्रामाण्यम्, तथा सति विशिष्टपरं वाक्यं विशेषणेष्वप्रमाणमिति विशिष्टपरमपि न स्यात्, विशेषणाविषयत्वात्। विशिष्टविषयत्वेन तु तदाक्षेपे परस्पराश्रयत्वम्, आक्षेपाद्विशेषणप्रतिपत्तौ सत्यां विशिष्टविषयत्वम्, विशिष्टविषयत्वाच्च तदाक्षेप इति। तस्माद्विशिष्टप्रत्ययपरेभ्योऽपि पदेभ्यो देवताविग्रहादयः प्रतीयमाना असति प्रमाणान्तराविरोधे न युक्ता अङ्गीकर्तुमिति। एतावांस्तु विशेषः— भामत्यां विशिष्टविधिस्थले तात्पर्यभेदाभावेऽपि वाक्यभेदादितरोऽङ्गीकारितः। सुधायां तु तात्पर्यभेदमङ्गीकृत्यैव तद्भेदोऽङ्गीकारितः।

वस्तुतस्तु न भट्टान् प्रति वाक्यभेद आपाद्यते, किन्तु

प्राभाकरान्प्रति; तैरन्वयभेदे वाक्यभेदाभ्युपगमात् । यथाऽऽहुः—अन्वितपदात्मकं हि वाक्यं तच्च कथं नान्वये भिन्ने भिद्येतेति । अतो जीवस्यावान्तरस्वामित्वेऽपि न दोषः । किञ्चान्तःकरणोत्पन्नदुःखादेरविद्यासहकृतस्वामित्वमेव सम्बन्धः । न च जपानिष्ठलौहित्यस्य स्फटिकादाविवान्तःकरणनिष्ठदुःखादेराध्यासिक एव सम्बन्धोऽस्त्विति वाच्यम्, सोपाधिकाध्यासत्वे जपास्फटिकयोर्लौहित्यस्येवात्ममनसोरुभयत्र युगपद्दुःखादिप्रतीत्यापत्तेः । निरुपाधिकाध्यासस्य ज्ञाताज्ञातविभागहीने निर्विशेषेऽसंभवात् । सामान्यतो ज्ञातत्वे सत्यज्ञातविशेषवत्त्वस्याधिष्ठानत्वे तन्त्रस्य निर्विशेषवादेऽसंभवाच्च । अत एव मिथ्यात्वमाकरे दूषितम् । सुखदुःखादिग्राहिसाक्षिणो निर्दोषत्वादिना याथार्थ्यनियमश्च प्रतिपादितः । जीवस्य तत्स्वामित्वमीश्वरदत्तमविद्यासहकृतमित्यपकृष्टमित्येव विशेषः । अत एव सांख्याधिकरणेऽनुव्याख्याने ।

> द्वैविध्येऽपि तु कामादेः कुतः स्वामित्वमात्मनः ।
> साक्षादनुभवारूढं शक्यतेऽपोहितुं क्वचित् ॥

इति कामादिस्वामित्वस्याप्रत्याख्येयत्वमुक्त्वा तदनन्तरश्लोके तस्यापकृष्टत्वमुक्तम् । न्यायसुधायां चास्यान्तवश्यत्वरहितगवादिस्वामित्वदृष्टान्तेन तस्यापकर्षः समर्थितः ।

ननु निर्विशेषवादेऽध्यासासंभवेऽपि त्वन्मते दुःखाद्यनुभवस्याध्यासरूपत्वमावश्यकम् । उक्तं ह्यानन्दमयाधिकरणे त्वद्भाष्ये "प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वमुच्यते" इति संसारिणोऽपि विमुक्तत्वश्रवणात्तदन्यथाऽनुपपत्त्या तस्य परब्रह्मत्वसिद्धेस्तद्विरोधो

भेदव्यपदेशस्येति शङ्कानिराकरणार्थत्वेनोदाहृतं भाष्यमवतार्य तस्यार्थो वर्णितः। जीवस्य परब्रह्मत्वाभावेऽपि विमुक्तत्वोक्तिर्युज्यते, बन्धस्याज्ञानमूलत्वेनास्वाभाविकत्वादिति। यत्त्वनुव्याख्याने बन्धस्याध्यासात्मकत्वनिरसनं तदभिप्रायो वर्णितो न्यायसुधायाम्—सर्वोऽपि बंधो बुद्धीन्द्रियशरीरविषयतद्धर्मलक्षणोऽस्माभिरप्यात्मन्यारोपित एवाङ्गीक्रियते। यथोक्तं भाष्यकृता "प्रमादात्मकत्वाद्बंधस्य" इति। अतः किंनिबन्धनो बन्धमिथ्यात्वनिरसननिर्बन्ध इत्याशङ्कां कृत्वा, सत्यम् बुद्धीन्द्रियविषयाः स्वरूपसन्त एवेश्वरपरवशा अप्यविद्यादिवशादात्मीयतयाऽध्यस्यन्ते, तांश्चात्मनोऽपि विविक्तानपि विस्पष्टतयानुपलभमानस्तद्धर्मान् दुःखादीन् सत्यानेवात्मत्वेन पश्यंस्तत्कृते नीचोच्चत्वलक्षणे विकृती सत्ये एव प्रतिपद्यन्ते इत्यादिवाक्यैः स्वमतस्थितिप्रतिपादनेन मायावादिनस्तु दुःखादिकं स्वरूपेणापि मिथ्येति मन्यन्ते। तन्निराकरणनिर्बन्धो युक्त इत्यद्वैतिमतनिराकार्यांशनिष्कर्षेण च स्पष्टीकृतः।

यत्तु साक्षिणो याथार्थ्यनियमान्न साक्षिरूपस्य दुःखित्वाद्यनुभवस्याध्यासत्वं युक्तमिति, तन्न, ईश्वरपरतन्त्रस्य जीवस्य स्वातन्त्र्यग्रहणे प्रमाणाप्रमाणज्ञानयोरप्रामाण्यग्रहे च तस्य याथार्थ्यपरित्यागात्। यदि [मानसे दर्शने दोषाः स्युर्न वै साक्षिदर्शन] इति यत्किञ्चिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदिति चानुव्याख्यानदर्शनात्स्वातन्त्र्यादिग्रहणं मनोवृत्तिरूपं न तु साक्षिरूपमितीष्यते, तदा दुःखित्वाद्यनुभवोऽपि त्वात्सिद्धान्तसिद्धाध्यासत्वनिर्वाहाय मनोवृत्तिरूप एव। यदि चैवं सति दुःखाद्यंशोऽपि

मनोवृत्तिविषयतैव स्यात्,—दुःखित्वाद्यनुभवव्यतिरेकेण दुःखादिमात्रविषयानुभवाभावात्। ततश्च दुःखादेः साक्षिविषयत्वं न सिद्ध्येदित्याशयः तदा दुःखित्वाद्यनुभवरूपसाक्षिणः आत्मीयत्वांशेऽध्यासरूपत्वं स्वीकार्यम् त्वयाऽपि सर्वेषां साद्यनुभवानां याथार्थ्यनियमो नेष्यते। असुराणां साक्षिणो यथार्थत्वाभावस्य मनुष्याणां साक्षिणो मिश्रत्वस्य चाङ्गीकारात्। एवं त्वत्सिद्धान्तिना तेषां सुनिश्चितेऽध्यासरूपत्वे यदन्यत्र प्रपञ्चमिथ्यात्वनिराकरणप्रस्तावे—

'सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम्।
साक्षिसिद्धस्य न क्वापि बाध्यत्वं तद्दोषतः॥

इत्यादि साक्षिणो याथार्थ्यकथनम्, यच्च सांख्यमतदूषणप्रस्तावे कामादिस्वामित्वकथनं तत्र न त्वयाभिनिवेष्टव्यम्। किन्तु परमतदूषणलोभेन दुराग्रहकृतमौढ्येन वा स्वसिद्धान्तविरुद्धभाषिणः स्वीया इत्येव शोचनीयाः।

याननुसृत्याधुनिका अपि त्वदीयाः परमतसिद्धाविद्यादूषणादिप्रस्तावेष्वनादिभावस्य निवर्त्यत्वमयुक्तमित्यादिस्वसिद्धान्तविरुद्धमेव जल्पन्ति त्वन्मतेऽनादिभावरूपमज्ञानं ज्ञाननिवर्त्यं च तथा च परमेश्वरस्याप्यध्यस्तदुःखित्वादिरूपजीवत्वं युक्तमिति।

अत्रोच्यते—जीवे दुःखित्वाद्यारोपः सोपाधिको निरुपाधिको वा? नाद्यः, लौहित्यस्य पुष्पस्फटिकयोरिव जीवमनसोरुभयत्र प्रतीत्यापत्तेः। नान्त्यः, शास्त्रीयनिर्दुःखित्वादिज्ञानेन सद्यो निवृत्त्यापत्तेः। जीवे दुःखित्वादिधीस्त्वविद्यासहकृतस्वामित्वादिसम्बन्धेन प्रमैव। दुःखादौ पारतन्त्र्याभावस्वातन्त्र्ययोर्भ्रमः शास्त्रीयपारत-

न्त्यज्ञानान्निवर्त्यंत एव। बाध एव हि भ्रमत्वे मानम्। न हि दुःखादौ विद्यमाने उपदेशसहस्रेणापि 'नाहं दुःखी' 'मयिदुःखं नास्ति' इत्यादिर्धीर्भवति। शास्त्रीयोक्तपारतन्त्र्यविषयकयत्किंचिज्ज्ञानप्रागभावनाश एव हि साक्षिदुःखादिनिष्ठपारतन्त्र्यादिषु विषयतानियामकः। साक्षिरूपज्ञानस्य नित्यत्वेऽपि विषयत्वस्य विशेषणस्याभावेन विशिष्टस्याभावः 'शिखी ध्वस्तः' इति वदुपपद्यते। बन्धस्य प्रमादात्मकत्वोक्तिः प्रमादोऽविद्यातत्सहितस्वामित्वमेव दुःखित्वादिसंसृतिनियामकमित्यविद्यानियम्यत्वाभिप्रायात्। अविद्याया दुःखित्वादिसम्बन्धघटकत्वादेवाज्ञानमूलत्वोक्तिः। आत्मनो जीवस्य सुखमिच्छतो दुःखमनिच्छतोऽपि सुखाभावदुःखयोरेव दर्शनेन परतन्त्रतया विविक्तान्सुप्रसिद्धानपि विस्पष्टमसंभावनादिरहितमनुपलभमानस्तान् धर्मानात्मीयत्वेन पश्यन्नीचोच्चत्वे तिर्यग्देवादिसंसारे प्रतिपद्यते। अन्तःकरणोपादेयधर्मेषु स्वयोग्येषु साक्षिणो याथार्थ्यनियमः। दुःखादिस्वातन्त्र्यादिकं च नान्तःकरणोपादेयम्।

वस्तुतस्तु दुःखादिनिष्ठस्वातन्त्र्यादिज्ञानं मनोवृत्तिरेव। न च दुःखित्वाद्यनुभवोऽपि मानसः स्यात्। दुःखित्वाद्यनुभवस्याध्यासत्वाभावेन मानसत्वकल्पनायां मानाभावात्। दोषाजन्यस्य साक्षिणो भ्रमत्वासंभवात्। दोषाजन्यस्यापि भ्रमत्वे ह्यप्रामाण्यस्य स्वतस्त्वं स्यात्। दुःखादीनां मानसवृत्तिवेद्यत्वाङ्गीकारे क्षणमज्ञातत्वापत्तिदोषवत्स्वातन्त्र्यादेर्मानसवृत्तिविषयत्वाङ्गीकारे दोषाभावात्। असुरमनुष्ययोरप्यन्तःकरणोपादेयधर्मेषु याथार्थ्यमस्त्येव। मुक्तियोग्यानां पूर्णानन्दत्वस्येवासुरादेर्दुःखादिस्वरूपस्याविद्ययाऽऽवृतत्वादेवायाथार्थ्योक्तेः।

तयाऽऽवरणं तु स्वरूपभूतज्ञानस्य विषयताप्रतिबंध एवे-त्युक्तम् । 'मम शरीरम्', 'ममेन्द्रियाणि', 'मम मनः', 'मम दुःखम्' इत्यादिप्रतीतिरप्यात्मीयत्वांशे भ्रमरूपा मनोवृत्तिरेव । अतः प्रपञ्चमिथ्यात्वखण्डनप्रस्तावे साक्षिणो याथार्थ्यवर्णनं साध्वेव । नित्यस्य दोषजन्यस्य भ्रमत्वासंभवात् । आत्मनः कामादिस्वामित्वकथने दोषो मूढेन त्वया नोक्त एव । अनादिभावस्य निवर्त्यत्व-खण्डनं तु दृष्टविधया निवृत्तिमङ्गीकुर्वतस्तव मत एव । अस्माकं त्वीश्वरप्रसादेनैवादृष्टविधया निवृत्तिमङ्गीकुर्वतां न कोऽपि दोषः । 'तस्मिन्प्रसन्ने क्लेशसंक्षय' इत्यादि स्मृत्या तथा बोधनात् । अतो न कुत्राप्यस्मदीयानां स्वसिद्धान्त-विरुद्धोक्तिः । किन्तु त्वदीयानामेव विरुद्धभाषित्वम् । तथा हि 'आत्मैकत्वविद्याप्रतिपत्तय' इति भाष्यकारेण प्रत्यग्ब्रह्मैक्यं शास्त्रविषय इत्युक्तम् । भामत्यां च ब्रह्मैव-शास्त्रविषयमित्युक्तमिति विरोधः । एवं भाष्यकारेणैव समन्वयाधिकरणे वेदान्तेषु विधिरेव नास्तीत्युक्तम् । "सहकार्यन्तरविधिः" इति सूत्रे तु विधिरङ्गीकृतः । एव-मन्यत्रापि विरोधो द्रष्टव्यः । तस्मादीश्वरस्य जीवाभेदे दुःखित्वमवर्जनीयमिति तयोर्वास्तवभेद एव युक्तः ।

अस्तु वा केवलं स्वामित्वमेव दुःखित्वम् । तच्चेश्वर-स्यैव । तावन्मात्रं च न हेयं किन्तु तत्प्रयुक्तं नीचत्वम् ।

नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यतेः ।
नीचोच्चता हि दुःखादेर्भोग इत्यनुमीयते ॥
नासौ नीचोच्चतां याति, पश्यत्येव सदा प्रभुः ।

इति भाष्योदाहृतवचनानुसारात् । दुःखादीन् सत्यानेवात्मीयतया पश्यन् तत्कृते नीचोच्चत्वलक्षणे

विकृती सत्ये एव प्रतिपद्यत इति न्यायसुधावाक्या नुसाराच्च ।

ननु दुःखित्वप्रयुक्तनीचत्वमेव हेयमित्ययुक्तम्, नीच त्वस्यैव दुर्वचत्वात् । न च दुःखहेतुकमाक्रन्दादिकमेव तदिति वाच्यम् । तस्यापि देहेन्द्रियविकाररूपतया जीवानाश्रितत्वात् । ईश्वरस्यैव तत्स्वामित्वाच्च । किंचा क्रन्दादिकं न सार्वत्रिकं लोके मानिनो धीरोदात्तस्य तापसादेश्च महति दुःखेऽपि रोदनाक्रन्दनादेरदर्शनात् अन्यस्य देहेन्द्रियविकारस्याप्यदर्शनात् । तदपायार्थमितर प्रार्थनादैन्यादेरदर्शनाच्च । कापालिकादिश्च भिक्षुकः स्वाङ्ग च्छेदकंटककर्दमतप्तबालुकाशयनादिभिः दुःखमनुभव न्नपि न तत्प्रयुक्तं नैच्यमनुभवति । किन्तु याचनाप्रयुक्त मेवेति तस्यापि तद्दुःखं हेयं न स्यात् । न च जगति यावत्किंचित् दुःखादिकार्यं तत्सर्वं नैच्यमेव । धीरादी नामपि दुःखानुभवादिप्रयुक्तविकारनिरोधप्रयत्नतदप नयनोपायचिन्तादि यत्किंचित्कार्यमस्त्येवेति वाच्यम् । परमेश्वरेऽपि नानाविधजगद्व्यापारस्य दुःखादिप्रयुक्ततया कल्पयितुं शक्यत्वेन तत्र नैच्याभावासिद्धिप्रसंगात् । त्वया ह्यानन्दमयाधिकरणे चतुर्विधा पुंसां प्रवृत्तिः सुखार्था दुःखनिवृत्त्यर्था सुखोद्रेकप्रयुक्ता दुःखोद्रेक- प्रयुक्ता चेति । तत्र प्रवृत्तित्रयस्येश्वरेऽनुपपन्नत्वात्सुखो- द्रेकप्रयुक्तैवेतिनिरूपितम् । तत्तदेव शोभेत यदि तस्य दुःखित्वं न स्यात् । तत्सत्त्वे तु जगद्व्यापारो दुःखोद्रेक- प्रयुक्तः कुतो न स्यात् । न च तथात्वे पुनरपि दुःखोद्रेक- हेतुं जगद्व्यापारं न कुर्यादिति वाच्यम् । दुःखोद्रेकाद्रोदना- दिषु प्रवृत्तेरभिसंधिपूर्वकत्वाभावात् । प्रत्युत शिरोऽक्षि-

रोगादिदुःखोद्रेकात्पुनरपि तदुद्रेकहेतव एवाक्रन्दशिरस्ताडनाश्रुविमोचनादिप्रवृत्तयो दृश्यन्ते । ईश्वरस्य दुःखित्वादेः श्रुतिविरुद्धत्वात्तद्व्यापाराणां तत्प्रयुक्तत्वं कल्पयितुं न शक्यत इति परिशेषात्सुखोद्रेकप्रयुक्तत्वमिति चेन्न । त्वद्रीत्या श्रुतिविरुद्धस्यापि दुःखित्वस्यापातात् । न च दुःखित्वप्रयुक्तकार्यं तत्र न भवतीति वाच्यम् । तत्र सुखित्वप्रयुक्तकार्याभ्युपगमे तद्वदेव दुःखित्वसत्त्वे तत्प्रयुक्तकार्यस्यापि दुर्वारत्वात् । अन्यथा सुखोद्रेककार्यमपि न स्यादिति चेन्न । स्वप्रयोजकाविद्यावत्त्वसंबन्धेन दुःखानुभवितृत्वस्वरूपस्य दुःखभोक्तृत्वस्य नैच्यस्य हेयत्वात् । सदा निरविद्यस्य दुःखादिस्वामिनोऽपीश्वरस्य तत्स्वामित्वरूपदुःखित्वप्रयुक्तनैच्यस्याभावात् ।

अविद्यया देहतत्कर्मादिष्वहं ममेत्यभिमानस्ततो देहकर्माद्यन्तरं ततो दुःखादिसन्ततिरित्यविद्यायाः दुःखादिप्रयोजकत्वं सुप्रसिद्धम् । 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' इत्यादि श्रुत्या जगद्व्यापारस्यानन्दोद्रेकप्रयुक्तत्वसिद्धावपि दुःखप्रयुक्तत्वे मानाभावेनापादयितुमशक्यत्वात् । नित्यदुःखे मानाभावेन सृष्ट्यादावीश्वरस्य दुःखोद्रेकाभावेन प्रवृत्त्यनुपपत्तेः । स्वरूपानन्दनित्यतायास्तवापि सम्मतत्वात् । दुःखोद्रेकस्यापि स्वप्रयोजकाविद्यावत्त्वसम्बन्धेनैव प्रवृत्त्यादिहेतुत्वाच्च । न च सुखोद्रेकोऽपि तेनैव सम्बन्धेन प्रवृत्तिहेतुः स्यात् नित्यनिरविद्यस्येश्वरस्य निवृत्ताविद्यस्य जीवन्मुक्तस्य च प्रवृत्तिदर्शनेन तथा कल्पयितुमशक्यत्वात् । एतेन दुःखकार्यमेव हेयं न दुःखमित्यङ्गीकारे न्यायसाम्यात्सुखकार्यमेवोपादेयं न तु सुखमित्यप्यङ्गीकार्यं स्यादिति निरस्तम्

उक्तदुःखानुभवितृत्वरूपस्य दुःखहेतुकनैच्यस्यैव हेय त्वोक्तेः।’ ‘को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दं न स्यात्। यदा वै सुखं लभते अथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोतीत्यादिभिरीश्वर व्यापारस्य सुखोद्रेकहेतुकत्वोक्तेः। एतेन सुखदुःखे निरुपधीच्छाद्वेषविषयतया पुरुषार्थापुरुषार्थरूपे सकलानुभवसिद्धे न तत्कार्ये, एवमनुभवविरोधमविगणय्य सुख दुःखकार्ययोरेव पुरुषार्थत्वापुरुषार्थत्वे अभ्युपगम्येते चेत् स्वाभ्युपगमानुसारेण त्वदीयसुखादेः पुरुषार्थपर्यवसायितानिर्वाहाय सुखानुभवकालेषु सर्वेषु यत्किंचिनृत्त गीतादिकार्यं कुर्वाणेनैव त्वया स्थातव्यं स्यात्। तच्च लोकानुभवविरुद्धम्। तदविरोधाय सुखदुःखयोरेव पुरुषार्थापुरुषार्थरूपत्वं स्वीकार्यमिति निरस्तम्। स्वप्रयोजकाविद्यावत्त्वसंबन्धेन दुःखस्य स्वप्रयोजकाविद्यावत्त्वतादात्म्यान्यतरसंबन्धेन च सुखस्यापुरुषार्थत्वपुरुषार्थत्वयोः स्वीकारात् दुःखित्वकार्यशब्देनोक्तसम्बन्धेन दुःखवत्त्वस्यैव व्यवहृतत्वात्। केवलस्वामित्वसम्बन्धेनैव तयोस्तदभावोक्तेः। तस्मादीश्वरात् जीवोऽत्यन्तहेय इति गुणपूर्तिवाचिना ब्रह्मशब्देन जीवेश्वरभेदसाधनं सूपपन्नम्। नन्वेवमुत्तरत्र जीवेश्वरभेदसाधनं न स्यात्। प्रथमाधिकरण एव तत्सिद्धेरिति चेन्न ब्रह्मशब्देनैवान्नभेदस्य प्रतिपादनात्। सकलद्वैतश्रुतिप्राबल्यचिन्तया सर्वप्रकारेणाप्युत्तरत्र जीवेश्वरभेदप्रतिपादनाच्च। अस्मन्मते हि प्राधान्येन जीवेश्वरभेदसाधनं पृथगुपदेशादित्याद्यधिकरणकृत्यम्। अप्राधान्येन तत्साधनमपि किंचित् भेदवाक्यमवलम्ब्य तत्र तत्रास्ति। अतएवानन्द-

मयाधिकरणे जिज्ञासासूत्रेण भेदव्यपदेशाच्चेति सूत्रस्य पौनरुक्त्यमाशंक्य 'न जीवभेदसूत्राणां शंक्यात्र पुनरुक्तता । वाक्यान्तरद्योतकत्वात् पृथगित्यत्र पूर्णते'त्यत्र पूर्णतेत्यनुव्याख्यानश्लोकं व्याचक्षाणेन न्यायसुधाकृतोक्तम् । अत्र शास्त्रे तत्र तत्र प्रकरणे ह्यैक्यविवक्षायां चोदितायां तद्गतभेदवाक्यद्योतनेन हि सूत्रेषु भेदसमर्थनं क्रियते । अतस्तात्पर्यभेदान्न पुनरुक्ताशंका । तथा हि जिज्ञासावाक्ये अभेदशंकायां तद्गतब्रह्मशब्देनैव भेदसमर्थनं जिज्ञास्यस्य जीवत्वे शंकिते तत्पूर्ववाक्योक्तलक्षणेन भेदसाधनं एवमेव 'भेदव्यपदेशाच्चान्य' इत्यादावपि पुनरुक्ततादोषः परिहरणीय इति । अत्र वदन्ति । अन्नमयादिशब्दा विकारार्थमयट्प्रत्ययानुरोधेनजीवादिवाचिनः तेषु ब्रह्मशब्दप्रयोगस्तु ब्रह्माभेदविवक्षयेति शंकिते तत्प्रकरणगतेन 'स यश्चायं पुरुष' इति भेदव्यपदेशेन प्रत्यवस्थानमित्यादि संगच्छते । इह तु जिज्ञासावाक्येष्वेव जिज्ञास्यब्रह्मनिर्विशेष जीवचैतन्यरूपमितीत्थं शंकाहेतोरभावात्सर्ववेदान्तानामखंडजीवपरत्वेन सगुणे ब्रह्मणि मानं नास्तीत्येव त्वया पूर्वपक्षप्रदर्शनात् । सर्ववेदान्तालंबनेन पूर्वपक्षे जिज्ञासावाक्यगतेनैकेन ब्रह्मशब्देन प्रत्यवस्थानायोगाच्चेहैव सकलद्वैताद्वैतश्रुतिप्राबल्यदौर्बल्यचिन्तया सर्वप्रकारेणापि भेदसाधनं कर्तव्यमिति पृथगुपदेशादित्यधिकरणमन्यत्र तत्साधनं च निष्फलमिति तन्न । 'आत्मावारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिविषयवाक्येषूपक्रमानुसारादात्मपदस्य तदैकार्थकब्रह्मपदस्य च रूढ्या जीवपरत्वे शंकिते योगरूढिभ्यां ब्रह्मपदेन निरासोपपत्तेः । जीव-

स्याप्ययदृष्टद्वारा कथंचिज्जगद्धेतुत्वशंकया ब्रह्माभेदशंका- संभवाच्च । सर्ववेदान्तावलंबनेन कृतस्यापि पूर्वपक्षस्यो- त्पत्तिशिष्टादिन्यायेन निराकरणस्योक्तत्वात् । 'नाहमी- श्वरो नाहं सर्वज्ञ' इत्यादि प्रत्यक्षं च जीवेश्वरभेदे मानम् न चानवगतस्येश्वरस्य भेदो न प्रत्यक्षोऽभावज्ञाने प्रति- योगिप्रत्यक्षस्य हेतुत्वादिति वाच्यम् । पिशाचस्याप्रत्य- क्षत्वेऽपि स्तंभः पिशाचो नेति पिशाचभेदस्य स्तम्भे प्रत्यक्षत्वात् ।

योग्यप्रतियोगिकत्वं संसर्गाभावे योग्यधर्मावच्छिन्न- प्रतियोगिताकत्वमन्योन्याभावे योग्यत्वं अतएव न स्तंभे पिशाचत्वान्योन्याभावग्रहः । पिशाचोन्या- न्याभावग्रहप्रतियोगितावच्छेदकपिशाचत्वजातेर्योग्य- त्वात् । महत्त्वोद्भूतरूपवद्व्यक्त्यवृत्तित्वान्न प्रत्यक्षम् । प्रकृते प्रतियोगितावच्छेदकमीश्वरत्वं सर्वविषयकज्ञान- वत्त्वं तच्च योग्यमेव । अभावप्रत्यक्षे प्रतियोगिता- वच्छेदप्रकारकज्ञानं हेतुः । तथा च शास्त्रीयलक्षणज्ञान- साचिव्येन रत्नतत्त्वसाक्षात्कार इव शास्त्रीयेश्वरज्ञान- साचिव्येन स्वात्मनि तद्भेदसाक्षात्कारः सूपपन्नः । एवं प्रत्यक्षावगतेन जीवेश्वरयोर्विरुद्धगुणवत्त्वेन दहनतुहिन- वद्भेदानुमानमपि सुस्थम् । तथा

भिन्नोऽचिंत्यः परमोजीवसंघात् ।
पूर्णः परो जीवसंघोह्यपूर्णः ॥
यतस्त्वसौ नित्य मुक्तोह्ययं च ।
बन्धान्मोक्षं, तत एवाभिगच्छेत् ॥

इति पूर्णापूर्णादिविरुद्धधर्मवत्त्वोपपत्तिमुख प्रवृत्ता श्रुतिरपि मानम् । न चेयमप्रसिद्धा । ज्ञाज्ञौ द्वावजावी-

शानीशौ' । 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीतीत्यादिश्रुतिम् 'य आत्मनि तिष्ठन्नित्यन्तर्यामिब्राह्मणं च प्रसिद्धं गृहाण । न चात्र भेदबोधकपदाभावः । आमनमस्यामनस्य देवास्तिस्र आहुतीर्जुहोतीत्यत्रेव द्वित्वसंख्याया एव भेदकत्वात् । 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयत' इति सूत्रकृताऽन्तर्यामिब्राह्मणस्य भेदपरत्वेन व्याख्यातत्वात् । न च श्रुतिर्व्यावहारिकभेदपरा । 'एतमन्नमयमात्मानमुपसंक्रम्य' 'निरंजनः परमं साम्यमुपैति' 'स एतान् ब्रह्म गमयतीतिश्रुतिषु मुक्तावपि प्राप्यप्राप्तृत्वसादृश्यप्रतियोग्यनुयोगित्वनेतृत्वनेतव्यत्वादिविरुद्धगुणवत्त्ववर्णनेन तद्भेदसिद्धेः । न चाभेदश्रुतिविरोधादन्यथानेयेयं श्रुतिः । भेदश्रुतीनां प्रत्यक्षानुगृहीतत्वेन प्राबल्यादभेदश्रुतेः प्रत्यक्षेण बाधाच्च । किंच तत्त्वमस्याद्यभेदश्रुत्या स्वरूपातिरिक्तोऽभेदो बोध्यते न वा? आद्ये वाक्यस्याखंडार्थकत्वहानिः द्वितीये स्वरूपमात्रज्ञानस्य भेदज्ञानाविरोधित्वेन भेदस्य पारमार्थिकत्वसिद्धिः । किंच भेदबाधकेन मानेन स्वभिन्नतया विषयीकृतस्यैव भेदस्य बाध्यत्वं वाच्यमतो भेदमात्रबाधकत्वं स्वव्याहतम्, न हि व्यावृत्तिमविषयीकुर्वज्ज्ञानं कस्यचिद्विरोधि ।

नन्वेतावता भेदप्रमाणं सर्वविरुद्धगुणवत्त्वोपजीवकमुपन्यस्तामिति विरुद्धगुणाक्रांतिरेक एव तव भेदसाधको न्यायः पर्यवसितः । सोऽनुपपन्नस्त्वन्मते जीवे सतामपि पूर्णानन्दादीनामावरणेनाल्पानंदत्वाद्यनुभवस्य स्वयांगीकृततया तन्न्यायेन ब्रह्मगुणानां निरतिशयसर्व-

ज्ञत्वसर्वशक्तिकत्वादीनां जीवे सतामेव संसारदशा-यामावरणेनाल्पज्ञत्वाल्पशक्तित्वाद्यनुभवसंभवाज्जीवे—तत्सत्वानभ्युपगमेऽपि ब्रह्मण्यैश्वर्यवशादणुत्वमहत्त्वाद्य-विरोधस्य च त्वयांगीकृततया तन्न्यायेनाधिकगुणस्यैव ब्रह्मणोऽल्पगुणजीवभावसंभवाज्जीवब्रह्मणोर्विरुद्धगुणव-त्त्वमसिद्धम्। एवं रत्नशास्त्रजलक्षणज्ञानस्य किंचिद्रत्न-लक्षणे तदन्यरत्नलक्षणत्वविषयतया भ्रमत्वे तन्मूलस्य रत्ने विशेषप्रत्यक्षस्येव जीवब्रह्मणोर्विरुद्धगुणवत्वा-सिद्ध्या तज्ज्ञानस्य भ्रमत्वे तन्मूलस्य भेदप्रत्यक्षस्य भ्रमत्वावश्यंभावान्न प्रत्यक्षं भेदे मानम्। हेत्वसिद्ध्य-प्रयोजकत्वादिभिर्नोऽनुमानं मानम्। जीवेऽपूर्णत्व-बद्धत्वयोरसिद्ध्या पूर्णापूर्णत्वयोर्बद्धमुक्तत्वयोश्चा-विरोधासिद्ध्या वा विरुद्धतदुभयवत्त्वोपपत्तिमुखेन भेदप्रतिपादने श्रुतेस्तात्पर्यं कल्पयितुं न युक्तमिति श्रुतिरपि तत्र न मानम् 'भिन्नोऽचिन्त्य' इत्यस्याः श्रुतेर-भेद एव तात्पर्यं सुवचम्। परमो जीवसंघाद्भिन्नो न चिंत्यः किं त्वभिन्न एव चिन्त्य इति। 'अपूर्णः पर' इत्या-द्यपि भेदे चिन्तननिषेधापेक्षितनिषेध्यप्रसक्तिपरतया योज्यम्। जीवब्रह्मणोर्हि प्रत्यक्षागमाभ्यामपूर्णत्वपूर्णत्वे बद्धनित्यमुक्तत्वे येऽवगम्येते ते च लोकतो विरुद्धत्वेन प्रतीयेते तन्मूलेन भेदभ्रमेण भेदानुचिन्तनं प्रसक्तमिति। किंच विरुद्धगुणसमावेशो न भेदसाधकः। विरुद्धगुणशा-लिनामप्यर्जुनेन्द्रादीनां त्वया भेदाभावस्येष्यमाणत्वात्। त्वया ह्येक आत्मनः शरीरेऽभावादित्यधिकरणे इन्द्रा-र्जुनादीनामन्योन्यानभिमतखांडवदहनप्रशमनादिकृतव-तामाराधकाराध्यत्वादिविषमगुणशालिनामपि निर्भेदत्वं

ऽव्यवस्थापितम् । इन्द्राद्यंशिनोऽर्जुनाद्या अंशाः पृथग्भूय संसारदशायामप्यंशिना सहाभिन्नाः पूर्ववत्पुनरपि तेनैक्यं च प्रतिपद्यन्त इति तत्सम्मतम् । एतेन जीवेशयोरभेदे ब्रह्मभोगानां जीवेऽप्यनुसंधानं स्यादिति निरस्तम् । त्वन्मते भेदाभावेऽप्यर्जुनगतेन्द्रभोगाननुसंधानवज्जीवगतब्रह्मभोगाननुसंधानोपपत्तेः ।

इन्द्रभोगादीनामर्जुनादीनां यदननुसंधानं तद्भेदाभावेऽपि भूम्याद्यपकृष्टदेशावस्थानगर्भप्रवेशमानुषान्नोपभोगादिकं निमित्तीकृत्याचिन्त्याऽप्रतिहतशक्तिकेन परमेश्वरेण क्रियते इति त्वयोक्तम् । एवं देहविशेषप्राप्त्यादिकं निमित्तीकृत्याचिन्त्यशक्तिकेनेश्वरेण जीवे पारमेश्वरस्य जीवान्तरगतस्य च भोगस्याननुसंधानं क्रियत इति किमिति त्वया वक्तुमशक्यम् । यत्तु परमेश्वरस्य जीवाभिन्नत्वे तस्यैश्वर्यमेव न भवेत्, यो जीवाभिन्नो नासावचिन्त्यशक्तिकतारूपैश्वर्यवान्यथा देवदत्त इति व्याप्तेरिति तन्न । योऽसौ जीवभिन्नो नासावैश्वर्यवान्यथा घट इतिवदप्रयोजकत्वादिति । अत्रोच्यते—

अन्योन्यं विरसा गुणा जगति ये निघ्नन्ति नैव प्रभो-<br>र्विष्णोरीश्वरताभवेत्सुरसता तेषां सदैश्वर्यतः ॥<br>अज्ञत्वादिसमागमे प्रतिहतं स्यादीश्वरत्वं हरे-<br>र्मानं नास्ति गुणान्तरेष्विव हरेरल्पज्ञतायां स्फुटम् ॥

सदानावृतेश्वरपूर्णानन्दात्तत्त्वतो भिन्नस्यावरणाविरोधिनो जीवपूर्णानन्दस्यावरणेऽपि सर्वार्थप्रकाशात्मकस्य सार्वज्ञस्य सदानावृतेश्वरसार्वज्ञाद्वस्तुतो भिन्नस्याज्ञानविरोधिस्वभावस्यावरणासंभवात् । न च सदानावृतेश्वरसार्वज्ञाद्भिन्नमेवावृतं जीवसार्वज्ञ्यमस्तु सार्वज्ञनाना-

त्वस्यैकमेवाद्वितीयमित्यादिश्रुतिविरुद्धत्वात् । पूर्णत्वस्य च करकघटतडागसमुद्रादीनामिव स्वयोग्यतानुसारेण बहूनामपि संभवात् । ईश्वरेऽज्ञानांगीकारे नित्यनिरवद्यत्वनित्यमुक्तत्वादिश्रुतिविरोधापत्तेश्च । न च मृषाज्ञानसंसारादेर्विद्यमानत्वेऽपि वास्तवतद्भावाभिप्राया नित्यमुक्तत्वादिश्रुतिः । त्वन्मते वास्तवबंधाऽप्रसिद्धेर्यादृशो बंधो ज्ञानेनोच्छेत्तव्यस्तदभाव एव हि नित्यमुक्तश्रुत्यर्थः । एवं चेत्याद्ययुक्तम् ।

अतल्लक्षणं तल्लक्षणतया विषयीकुर्वता शास्त्रजन्येनाप्रमाभूतेन जन्यस्य तत्समानविषयकस्य प्रत्यक्षस्या प्रामाण्येऽपि प्रतियोगिज्ञानविधया शास्त्रीयज्ञानजन्यस्य नाहमीश्वर इत्यादिप्रत्यक्षस्य भ्रमत्वे बीजाभावात् । नह्यत्र जीवे परेशत्वाभावबोधकशास्त्रजन्यज्ञानं भेदप्रत्यक्षे हेतुः । येन त्वदीयक्षुद्राशंकाभासः संभाव्येतापि । कल्पितभेदवतो योगिनः कायव्यूहे दुःखाद्यनुसन्धानदर्शनेन वास्तवभेदस्यैवाननुसंधानादिप्रयोजकत्वात् । जीवे अपूर्णत्वादेः प्रत्यक्षसिद्धत्वात् । बद्धत्वमुक्तत्वयोस्त्वंधकारालोकयोरिव सुप्रसिद्ध एव विरोधः । अन्यथोभयोः सदैकत्रावस्थानापत्त्या मुक्तेरपुमर्थत्वापत्तेः । 'भिन्नो चिन्त्य' इत्यादिश्रुतेर्बिपरीतयोजनं तु नाहमीश्वर इति प्रत्यक्षविरुद्धम्, 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्त्वमेतीत्यादिश्रुत्या पृथक्त्वज्ञानस्य मोचकत्वोक्त्या भेदचिन्तननिषेधोक्तिर्वृथाप्रलाप एव । एकत्र लोके विरुद्धयोः पूर्णापूर्णत्वयोर्मुक्तत्वामुक्तत्वयोश्च निर्दुष्टवेदप्रत्यक्षाभ्यां जन्यस्य ज्ञानस्य भ्रमत्वासंभवः ।

भेदादिबोधकश्रुतेरप्रामाण्ये तद्दृष्टान्तेन वेदमात्र-

स्याप्रामाण्यापत्त्या सौगतमतप्रवेशः स्यात्। खांडवदहन-शमनयोः कर्तृत्वं युगपदप्येकस्य न विरुद्धम्। एकेन हस्तेन दहनानुकूल्यस्यापरेण शमनानुकूल्यस्यैकस्मिन्नपि पुरुषे संभवात्। एकेन हस्तेनान्यस्मिन् हस्ते चन्दनार्चन-वदेकस्याराधकाराध्यत्वाद्युपपत्तिः। सुप्रसिद्धो हि श्रीकृ-ष्णश्रीव्यासयोरैक्येऽपि पूज्यपूजकभावः। जीवानां केषां चित् सांशत्वं सामर्थ्यविशेषवत्त्वं व्यवहितविप्रकृष्टदेहे-ष्वणोरपि सुखदुःखाद्यनुभवितृत्वादिरूपम्। अल्पशक्ते-रप्रकृष्टपरिमाणस्य जीवस्यार्जुनदेहावच्छेदेन भूसंनिकर्षा-दिना स्वर्गभोगप्रतिबन्धसंभवेऽपि सर्वदाऽप्रतिबद्धानन्त-शक्तेः नित्याप्रतिबद्धसार्वज्ञस्येश्वरस्य जीवाभेदे जीवदे-हावच्छेदेन दुःखानुसंधानसुखाननुसंधानयोरानुकूल्यस्य स्वस्मिन्नेवाचरितत्वापातात्। न हि कोऽपि प्रेक्षावाननु-न्मत्तः स्वस्मिन् दुःखानुसंधानं सुखाननुसंधानं चेच्छति। योऽसावित्याद्ययुक्तम् सुखदुःखयोरेकक्षणावच्छेदेनैका-धिकरणवृत्तित्वस्य तदनुसंधानस्य चासंभवेन दुःखानु-भवितृजीवाभेदस्येश्वरेऽङ्गीकारे निर्दुःखत्वस्य दुःखानु-भवस्वरूपायोग्यत्वस्य श्रुतिशिखरसिद्धस्य हान्यापत्तेः। दुःख्यभेदस्य निर्दुःखत्वविरोधवज्जीवभेदस्यानैश्वर्या-व्याप्तत्वात्। किं चाभेदस्यानुसंधानमात्रं व्यापकं न तु सर्वानुसंधानमर्जुनादीनामाखण्डलादिगताल्पविषयभो-गाननुसंधानेऽपि तद्गतोपासनाफलाद्यनुसंधानमस्त्येव। एवं च जीवब्रह्मणोर्जीवानां चाभेदे देवदत्तस्य ब्रह्मगत जीवान्तरगतयत्किंचिद्भोगानुसंधानं दुर्वारम्। ननु यद्यभेदे सत्यप्यननुसंधाने एकस्मिन्नेवाननुसधानमनुसं-धानं च विरुद्धं प्रसज्येतेत्यनुकूलतर्कमुपजीव्यानुसंधान-

स्याभेदव्यापकत्वं गृह्यते। तदा सर्वानुसंधानमेव व्यापकं कस्यचिदप्यननुसंधाने तद्विरोधसमाधानालाभात्।

यदि त्वभेदेऽपि कस्यचिदननुसंधानं संभवति तदीयाचिन्त्यशक्तिबलेनानुसंधानाननुसंधानविरोधविधूननादिति सर्वानुसंधानस्य च व्यापकत्वं नेष्यते, तदानुसंधानमात्रमपि न व्यापकं तद्बलेनैव क्वचिन्न कस्याप्यनुसंधानमित्यपि वक्तुं शक्यत्वादिति चेन्न। इन्द्रार्जुनयोरभेदे सर्वसम्मते सत्यपि सर्वानुसंधानाभावेन व्यभिचारात्। सर्वानुसन्धानापादकाभावाच्च। इन्द्रानुसंधेयसर्वानुसंधानस्यार्जुने इष्टापत्तेश्च। न चार्जुनस्य स्वर्गभोगानुसंधाने क्षुद्रे मानुषभोगे प्रवृत्तिर्न स्यात्।

श्रीरामकृष्णादिवल्लीलया तदुपपत्तेः। मनुष्यानुकरणेनैव स्वर्गभोगादिग्रहणेऽपि तदुपपत्तेश्च। न चैवं जीवेशानुसंधानादिसांकर्येऽपीष्टापत्तिः। 'तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप' इत्यादि स्मृतिविरोधात्।

जीवस्य स्वतंत्रसर्वज्ञाभेदे स्वहिताकरणाहितकरणादौ प्रवृत्त्यनुपपत्तेश्च सार्वज्ञानुभवापत्तेश्च। ननु 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति, "अन्यश्च परमो राजंस्तथान्यः पंचविंशकः" 'भेदव्यपदेशाच्चान्यः' इत्यादिश्रुतिसूत्रेष्वन्यत्वव्यपदेशो भेदसाधक इति न युक्तम्। त्वन्मते ब्रह्मण्यन्यत्वव्यपदेशस्य भेदासाधकत्वात्। त्वयान्नमयादीनां पंचानामपि ब्रह्मत्वमभ्युपगच्छतान्नमयाद्यभिन्नेष्वेव प्राणमयादिष्वन्योन्तर आत्मेति व्यपदेश इतीष्यमाणत्वात्।

'अनन्योऽप्यन्यशब्देन तथैकोबहुरूपवान्।
प्रोच्यते भगवान् विष्णुरैश्वर्यात्पुरुषोत्तमः॥

इति वचनमुदाहृत्य तस्य निर्वहणाच्च । जीवे ब्रह्मान्यत्ववचनस्यापि तद्वदेवैश्वर्यान्निर्वहणसंभवाच्चेति चेत् । सर्वशब्दानां स्वार्थे वृत्तिरौत्सर्गिकी अन्यशब्दस्य भिन्नत्वमेव मुख्योऽर्थः । तथाप्यानन्दवल्ल्यां–अन्नमयादिपर्यायेषु पंचस्वपि 'येऽन्नं ब्रह्मोपासते ये प्राणं ब्रह्मोपासते' 'आनन्दं ब्रह्मणो विद्वान्' 'विज्ञानं ब्रह्म चेद्वेद'। 'अस्ति ब्रह्मेति चेद्वेदेति ब्रह्मशब्दाम्नानेन । 'एतमन्नमयमात्मानमुपसंक्रामतीत्यादिपर्यायेषु मुक्तप्राप्यत्वलिङ्गात्मशब्दयोः सत्त्वेन चान्नमयादीनां पंचानामपि ब्रह्मत्वावधारणाद्ब्रह्मणश्चैकमेवाद्वितीयमित्यादिभिरेकत्वावधारणात्प्राणमयादिपर्यायेष्वन्योऽन्तर आत्मेत्यन्यशब्दानां मुख्योऽर्थः परित्यज्यते । न च जीवब्रह्मणोरन्यत्वव्यपदेशो बाधकमस्ति । ब्रह्मण्यणुत्वमहत्त्वादीनां च तदुपपादकैश्वर्याविरोधिनां लोके विरुद्धानामपि समावेशोऽस्तु नतु सर्वज्ञत्वाल्पज्ञत्वयोरैश्वर्यविरोधित्वात् । नन्वेकमेवाद्वितीयं नेह नानास्ति किंचनेत्याद्यभेदश्रुतीनां भेदश्रुतितः प्राबल्यं तवापि सम्मतमेव । अन्यथा अन्योन्तर आत्मेति भेदश्रुत्यनुसारेणान्नमयादौ भेदो दुर्वारः । न चाभेदश्रुतीनां ब्रह्मभेदश्रुतिभ्य एव प्राबल्यं न जीवब्रह्मभेदश्रुतिभ्य इत्यत्र विशेषहेतुरस्ति । एकमेवाद्वितीयमित्यादिशब्दस्वारस्यस्यास्मदुक्तषड्विधतात्पर्यलिङ्गवत्त्वस्य लाघवस्य च प्राबल्यहेतोरुभयत्र तुल्यत्वादिति चेन्न । भेदाभेदश्रुतित्वादिना प्राबल्यस्यास्माभिरनुक्तत्वात् । मानान्तराद्यविरुद्धेऽर्थे श्रुतेस्तात्पर्यात् । जीवेशयोरभेदो ब्रह्मणो भेदश्च सर्वमानविरुद्ध इति स्यादेव तत्परतयापाततः प्रतीयमानश्रुत्योरन्यार्थकत्वं । किं च

नाभेदश्रुतीनां प्राबल्याद्ब्रह्मभेदश्रुतीनां मुख्यार्थत्यागः। किन्तु सर्वश्रुतिमहत्तात्पर्यानुरोधात्। तथा हि सर्वश्रुतिनां मोक्ष एव प्रधानं प्रयोजनम् 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते' इति वचनात्।

मोक्षस्य तत्प्रयोजनत्वं न साक्षात्तत्साध्यतया तस्यानेकश्रुतिस्मृतिभिरीशप्रसादजन्यत्वनिश्चयात्। किन्तु यज्ज्ञानेन मोक्षहेतुभगवत्प्रसादः संपद्यते तत्प्रतिपादनद्वारेति वाच्यम्। तत्प्रसादश्च तदीयनिर्दोषगुणोत्कर्षज्ञानाद्भवतीति लोकतः 'प्रियोऽहं ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इत्याद्यागमैश्चावधारितम्। अतः सर्ववेदानां भगवतो निर्दोषाशेषगुणत्व एव महातात्पर्यं तद्विरुध्यते। ब्रह्मभेदश्रुतीनां स्वार्थपरत्वे भिन्नानां गुणतारतम्यानुग्राह्यानुग्राहकभावादिदर्शनेन ब्रह्मरूपेष्वपि तत्प्रसक्त्या निर्दोषाशेषगुणवत्त्वासिद्धेः। जीवेश्वरभेदश्रुतिनां स्वार्थपरत्वे तु तन्न विरुध्यते। प्रत्युत तासां तत्परत्व एव विरुध्यते। जीवब्रह्माभेदे जीवदोषेण ब्रह्मणोऽपि सदोषत्वापत्तेः। अतो ब्रह्मभेदश्रुतीनामेव स्वार्थत्यागो न जीवब्रह्मभेदश्रुतीनामिति विशेषो युक्तः। नन्वन्नमयादीनां विश्वतैजसादीनां ब्रह्मरूपाणां भेदश्रुत्यनुसारेण विरुद्धगुणवत्त्वानुसारेण च भेदे सत्यपि भगवदैश्वर्यवदेव निर्दोषाशेषगुणपूर्णतोपपत्तिः। न हि भगवानशेषमपि स्वेच्छया कर्तुमकर्तुमन्यथाकर्तुमपि शक्त इति वदतस्तव लीलया भिन्नो भवन्नप्यहं निर्दोषाशेषगुणपूर्णः स्यामिति स्वसंकल्पेन भेदमास्थाय क्रीडितुं न शक्त इति वक्तुं शक्यमिति चेन्न। ब्रह्मभेदश्रुतीनां सयुक्तिकब्रह्मैक्यश्रुतिविरोधेनातत्परत्वात्। अणुत्व-

महत्त्वादिधर्माणां स्वसमावेशोपपादकैश्वर्याविरोधित्वाद-ल्पज्ञत्वादेस्तद्विरोधित्वाच्च । सप्रज्ञस्य स्वानिष्टसंकल्पा-संभवाच्च । एतेन भेदश्रुत्या विरुद्धधर्माक्रान्त्या चान्नमया-दीनां विश्वादीनां च स्वतः प्राप्तस्य भेदस्यापवादकाभा-वे तस्यावश्यं तथा संकल्पः कल्प्य इति निरस्तम् । जीवे-शाभेदे बाधकस्य प्रत्यक्षादेरुक्तत्वात् । जीवस्य प्रयोज-काविद्यावत्त्वादिसंबन्धेन दुःखित्वम् ईश्वरस्य तत्संब-न्धेनैव निर्दुःखित्वमित्युक्तत्वाच्च । किंच धर्ममीमांसायां व्युत्पादितैः शब्दान्तरादिप्रमाणैर्जीवब्रह्मणोर्भेदः सि-द्ध्यति । अस्ति हि 'एष एव जीवं प्रबोधयति । एतस्मा-ज्जीव उत्तिष्ठतीति'' विरुद्धार्थकधातुनिष्पन्नाख्यातरूपं शब्दांतरं 'नित्यः परो नित्यो जीव' इत्यप्रत्यभिज्ञायमान-पुनःश्रुतिरूपोऽभ्यासः, द्वासुपर्णेत्यादिसंख्या, अनश्नन्-न्नित्यादिभेदको गुणः, यतो वाचो निवर्तन्त इत्यादि-प्रकरणान्तरं जीवेशावितिनामधेयभेदश्चेति ।

ननु तथापि शब्दान्तरादिभिर्न पारमार्थिको भेदः सिद्ध्यति । कर्ममीमांसकैः शब्दान्तरादीनां मुख्यभेदे प्रमाणतयानुपन्यासात् । न हि तैः शब्दान्तरादिकं प्रदर्श्योपपाद्यमानस्तदभावं प्रदर्श्यापोद्यमानश्च कर्म-भेदः शास्त्रभेदो वान्योन्याभावरूपो मुख्यो भेदः ।

'सप्तदश प्राजापत्यान्पशूनालभत इत्यत्र 'दधिमधु-घृतपयोधानाः करंभास्तंडुलास्तत्संसृष्टं प्राजापत्य-मित्यत्र, 'ऐन्द्रं दध्यमावस्यायामित्यत्र च प्राजापत्य-पशूनां प्राजापत्यद्रव्यादीनामैन्द्रदधिपयसोश्च प्रदानयोग-पद्येन प्रजापत्याद्युद्देशेन तत्तद्द्रव्यविषयसंकल्परूपाणां

यागानामेकैकत्वेऽपि सप्तदश प्राजापत्ययागाः सप्त दध्यादियागाः द्वौ दधिपयोयागौ इति भेदोपपादनात् । सोमेन यजेतेत्यत्र इन्द्रवाय्वाद्युद्देशेन तत्रत्यात्रस्थितसोमरससंकल्परूपाणां यागानां भिन्नत्वेऽपि, अग्निहोत्रं जुहुयादित्यत्राहवनीयादिषु हविःप्रक्षेपरूपाणां होमानां भिन्नत्वेऽपि भेदनिरासात् । सप्तदश प्राजापत्यानितिवाक्यरूपस्य शास्त्रस्यैकत्वेऽपि भेदोपपादनात् । व्रीहिभिर्यजेत व्रीहीनवहंतीत्यादिवाक्यरूपाणां शास्त्राणां भिन्नत्वेऽपि भेदनिरासाच्च ।

यद्यपि कर्मापि गोत्वादिवदेकमेव नित्यमनेकानुगतं नत्वाश्रयभेदेन तद्भेदोऽस्ति । अयं चलत्ययमपि चलतीत्यादिप्रत्यभिज्ञया तदैक्यसिद्धेः । तद्भेदबुद्धेराश्रयभेदादुपपत्तेः । सन्तताऽनुपलब्धेश्च शब्दवद्व्यंजनाभावेनोपपत्तेः । एवमन्यत्रापि कर्मैक्येऽपि यत्र शब्दान्तरादिभेदकमस्ति तत्र कर्मभेदोऽङ्गीक्रियतेऽतः शब्दान्तरादिप्रमाणषट्कावधिः कर्मभेदः, ततःपरन्तु तदभेद इति कौमारिलानां क्वचित्पक्षे 'सोमेन यजेत' 'अग्निहोत्रं जुहुयादित्यत्र शब्दान्तराद्यभावान्न यागहोमभेदः । किंत्वेकस्यैव यागस्य होमस्य च देवताभेदेनाधिकरणभेदेन चाभ्यासमात्रमिति मुख्यो भेद उपपादयितुं शक्यते । तथापि सप्तदश प्राजापत्यानित्यादिषु तस्मिन्नपि मुख्यभेद उपपादयितुं शक्यत एव । अत एवास्वारस्यात् सर्वलोकसिद्धभेदप्रत्यक्षतोऽपि बलवती प्रत्यभिज्ञा शब्दान्तरादितः कथं बलवती न स्यादित्यस्वारस्याच्च स सर्वत्र कर्मैक्यपक्षे शब्दान्तरादिस्थलेऽप्यमुख्यभेद एव कौमारिलैराश्रितः । शब्दान्तरे कर्मभेद

इत्यादिसूत्रस्वारस्याय स्वप्रौढ्या समर्थयितुं परं शब्दान्तरादिस्थले मुख्यः कर्मभेद इति कश्चित्पक्ष उपन्यस्तः ।

अतोऽनुष्ठानविशेषोपयोग्यपूर्वभेदाद्युपाधिकः काल्पनिको भेदः शब्दान्तराद्यवसेय इत्येव सर्वेषां कर्ममीमांसकानां मतम् । उक्तम् हि तंत्ररत्ने—क्रियाणामाश्रितत्वाद्द्रव्यान्तरे विभागः स्यादित्यधिकरणे । अथापि नाम सर्वत्रैलोक्यवर्तिन्येकैव कर्मव्यक्तिरनुष्ठानमात्रं तु भिद्यते यावदेकापूर्वानुबंधनमेकेन शास्त्रेण विषयीकृतं तावदेकं कर्म, तदन्यत्तु भिद्यत इति भेदाभेदव्यवहारसिद्धिरिति । उक्तं च वरदराजीये शब्दान्तराधिकरणे भिन्नापूर्वानुबंधप्रतिपादनयोग्यताज्ञानं यत्तदेव शास्त्रभेदज्ञानमित्युच्यत इति । तत्रैव संख्याधिकरणेऽप्युक्तम् । न च सप्तदश प्राजापत्यानितिवाक्यस्यैकत्वान्न शास्त्रभेदः । न वाक्यभेदः शास्त्रभेदे तन्त्रम्, निरपेक्षभिन्नालौकिकार्थत्वमेव तत्, तच्चेहाप्यस्तीति । एवं च यथा पूर्वतंत्रे शब्दान्तरादेर्वस्तुतो भेदरहितेऽपि काल्पनिकभेदविषयतयैव चारितार्थ्यमेवमिहापि जीवब्रह्मणोर्वास्तवभेदाभावेऽपि काल्पनिकभेदविषयतया चारितार्थ्यं संभवतीति चेत् ।

अत्रोच्यते । सप्तदशप्राजापत्यादिषु संप्रतिपन्नदेवताकत्वेन कर्मसौकर्याय प्रदानैक्येऽपि तत्तदुद्देशेन तत्तद्द्रव्यविषयकयागापरपर्यायसंकल्परूपाणां भेद आवश्यकः । अन्यथाऽपूर्वभेदो न स्यात् । नहि सामग्रीभेदं विनाऽदृष्टभेदः कल्पयितुं शक्यः । संकल्परूपयागैक्ये सप्तदशत्वादिसंख्यानन्वयः स्यात् । एकत्वाभिन्नसंख्यायाः स्वसमसत्ताकेन स्वाश्रयभेदेन सह सामानाधिकरण्यनियमात् । सोमेन यजेताग्निहोत्रं जुहुयादित्यत्र च शब्दान्तराद्य-

भावान्न भेदः। किंत्वेकस्य सोमस्य देवताभेदेनाधिकरणभेदेन चाभ्यासमात्रम्। न तु संकल्पादिरूपयागभेदः। अतः शास्त्रयागयोर्भेदाभ्यासयोः शब्दान्तरादितदभावावेव मानम्, प्रत्यभिज्ञात्वयं दंडी अयं दंडी घटो रूपी पटो रूपी घटो ध्वस्तः पटो ध्वस्त इत्यादि क्रियाभेदेऽप्युपपद्यते। देशकालकर्त्रादिभेदेन क्रियाव्यक्त्यो भिद्यंते। शब्दान्तरादिभिश्चाग्नेयत्वादिजातय एव भिद्यन्ते। जगतीतलवर्त्यैकैव क्रियाव्यक्तिः शब्दवत्तस्या एव सामग्र्या अभिव्यक्तिरित्यशुद्धम्। अपूर्वस्यापलापापत्तेः। तस्याभिव्यक्तिजन्यत्वे च यजिपदे लक्षणापत्तेः। घटपटादीनामप्येकैकव्यक्तिकत्वापत्तेः। अयं दंडी अयं दंडीति चायं चलत्ययं चलतीति प्रत्यभिज्ञायाः क्रियाभेदेऽपि सूपपन्नत्वेन तद्विरोधाभावाच्च। शब्दान्तरादितो मुख्य एव भेदः सिद्ध्यति। सूत्रस्वारस्याच्च शब्दान्तरादिस्थले मुख्यो भेद इतिपक्ष एव मुख्यतयाऽभिप्रेतः। यागाभेदपक्ष एव प्रौढिः तत्पक्षस्यैव तंत्ररत्ने 'अथापि नामेत्यादिना प्रौढित्वोक्तेः। यागैकपक्षस्य मानान्तरविरुद्धस्यैव प्रौढ्युक्तेर्न्याय्यत्वाच्च। अतो यत्र शब्दान्तरादिर्भेदकं प्रमाणं तत्र यागभेदस्ततोऽपूर्वभेदः। कार्यभेदस्य सामग्रीभेदाधीनत्वात्। अग्निहोत्रसोमादौ च शब्दान्तराद्यभावाच्च न यागहोमभेदः। किंत्वेकस्यैवाभ्यासोऽतोनापूर्वभेदः। किं च जीवेशभेदस्य काल्पनिकत्वेऽर्जुनादीन्प्राति सर्वज्ञकर्तृकोपदेशानुपपत्तिः। न हि मायिकस्य भेदस्य मायामोहं विना दर्शनं संभवतीति। न वा मायामोहितस्येश्वरत्वे मानमस्ति। न चास्वाप्निकगुरुशिष्यवदुपपत्तिः। स्वाप्निकगुर्वादेः स्वस्य शिष्यस्य च

कल्पितत्वमजानतो भ्रान्तस्योपदेशकत्वादिसंभवेऽपि सर्वस्य कल्पितत्वं जानतस्तदसंभवात्। न चैन्द्रजालिकवदीश्वरस्य कल्पितदर्शनोपपत्तिः। स्वमायामोहरहितस्यैन्द्रजालिकस्य कल्पितदर्शनासंभवात्। यथा हि वैद्यः शास्त्रगुरूपदेशादिज्ञातौषधप्रभाव इदमौषधमिमं रोगमाशु नाशयति पश्यन्त्विति वदति तथा गुरूपदेशादिनाऽनेन मंत्रादिप्रयोगेनेत्थं लोको भ्राम्यतीति ज्ञातमंत्रादिप्रभाव इममापश्यंस्त्विति तदापरोद्याभावेऽपि वदत्यैन्द्रजालिकः। ननु तथापि शब्दान्तरादिना न भेदसिद्धिः। शब्दान्तरादिसत्त्वेऽपि विद्याभेदाऽनंगीकारात्। सर्वविद्याम्नातानां सर्वेषां गुणानामुपसंहारः कार्य इति न विद्याभेदेन गुणानां प्रतिकरणं व्यवस्था किन्तु मानुषाद्या हिरण्यगर्भान्ता मुक्त्यधिकारिणः फलतारतम्येन मुक्तिभाज इत्यधिकारिभेदेनैव तत्र हिरण्यगर्भः सर्वोत्कृष्टमुक्त्यर्हतया कर्मकाण्डस्थसकलगुणोपसंहारयोग्यः। अन्ये तु स्वस्वभाविमुक्त्यनुसारिगुणोपसंहारयोग्याः। यद्यप्यस्मदादिभिर्मुक्त्यधिकारिभिरुपासनारम्भसमये स्वस्वभाविमुक्तिस्वरूपं प्रतिपुरुषमनादियोग्यतानुसारेण व्यवस्थिततारतम्यमजानद्भिः स्वस्वोपासनायोग्या गुणा निश्चेतुं न शक्यन्ते तथापि स्वस्वगुरोरन्यस्माद्वा सर्वज्ञात्तान् गुणान्निर्णीय तदुपसंहारः कार्यः। ब्रह्मणोपसंहर्तव्यानां सर्वगुणानामाम्नानस्यैकस्यां विद्यायामभावादिति शब्दान्तरादीनां भेदकत्वं स्पष्टं त्यक्तमिति चेत्, एकत्र बाधकात्त्यागेऽपि सर्वत्र त्यागे वीजाभावात्। यत्तु शब्दान्तरादयः कर्मभेदकाः सन्तु न वा ब्रह्मणि तु भेदका न भवन्त्येव। तथा हि 'एषह्येव जीवं

प्रबोधयति एतस्माज्जीव उत्तिष्ठतीति विरुद्धार्थधातुनिष्पन्नाख्यातरूपस्य शब्दान्तरस्य भेदकत्वं तद्बोधकत्वावच्छिन्नस्योद्बोध्यत्वावच्छेदो विरुद्धः इत्यतो विरोधमूलमेव वाच्यम्। न च तद्युक्तम्। त्वया ब्रह्मणि विरुद्धधर्मसमावेशांगीकारात्। 'नित्यः परो नित्यो जीव' इति नित्यत्वाभ्यासस्य परजीवयोरेकत्वे परनित्यत्वश्रुत्यैव जीवस्यापि नित्यत्वसिद्धेस्तत्पुनःश्रुतिरनर्थिका स्यादिति पुनःश्रुत्यानर्थक्यं मूलं वाच्यम्। तदपि न युक्तम्। कार्यकारणाभेदवादिना शक्तिव्यक्त्यभेदवादिना च त्वया नित्यत्वानित्यत्वादिसांकर्यस्य स्वीकारेण तत्तथैव परनित्यत्वेऽपि जीवानित्यत्वशंकावारणेन सार्थकत्वात्। संख्याया गुणस्य च भेदकत्वं यस्मिन् 'पंच पंच जना' 'अणोरणीयान्महतो महीयान्' इत्यादौ त्वयैव प्रतिषिद्धम्। प्रकरणभेदो न भेदक इति स्पष्टमेव। भारतादिषु रामकृष्णादिचरितप्रतिपादकप्रकरणभेदेऽप्यभेदानपायात्। सृष्टिसंहारादिप्रकरणभेदेऽपि त्वया सृष्टिसंहारादिक्रियाणामभेदस्यांगीकाराच्च। एतेन जीवेशाविति नामभेदस्यापि भेदकत्वमिति निरस्तम्। तस्मात्परस्परविरुद्धधर्मादिमतामवतारादीनामिव जीवानामप्यभेदश्रुत्यनुसारेण तदत्यन्ताभिन्नवासुदेवांशत्वं त्वया विचारयितुं न शक्यत इति। तत्तुच्छम्। बोध्यबोधकत्वयोः सामानाधिकरण्यस्यैश्वर्याविरोधिनोऽस्माभिरनंगीकारात्। न हि नित्याप्रतिहतबोधस्येश्वरस्याबोधादिकं संभवति प्रधानत्वेन नित्यत्वं महत्तत्त्वादिना चानित्यत्वमिति व्यवस्थयैव नित्यत्वादिसांकर्यस्वीकारात्। महत्तत्त्वादयो ह्यवस्थाविशेषाः कारणकलापैर-

भिव्यज्यन्ते । परनित्यत्वज्ञानेऽपि जीवस्यानित्यत्वशंकायाः परजीवभेदज्ञानं विनाऽनुपपत्तेः। यत्र संख्यान्वयबोधात्प्रागेवाभेदसिद्धिः तत्र संख्या न भेदिका। यथा विराट्संपन्नमग्निहोत्रं जुहोति । एकादश प्रयाजान्यजतीत्यत्राग्निहोत्रैकत्वस्य प्रयाजपंचत्वस्य च प्रागेव निर्णयान्न संख्यया भेदः । किन्त्वावृत्त्यैवैकादशत्वादिसम्पादनम् । तथा "प्राणस्य प्राणश्चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मन" इत्यादिनियामकस्यैकत्वानिश्चयाद्यस्मिन्पंच पंच जना इत्यादि संख्या न भेदिका। किन्तु पाशाधिकरणन्यायेनैकत्रैवान्वयः । ज्ञाज्ञावित्यादौ तु प्राक्तद्निर्णयात्स्यादेव संख्या भेदिका। प्रकरणमप्यसति बाधक एव भेदकं रामकृष्णयोर्भेदे बाधकवज्जीवेशयोर्भेदे बाधकं नास्ति जीवेशावितिनाम्नो र्भेदेकत्वं सुस्पष्टमेव । जीवस्य वासुदेवावतारत्वे तं प्रत्युपदेशोऽसंगत एव। न हि रामकृष्णमत्स्यकूर्मादीनां परस्परमुपदेशोऽस्ति ।

इत्थं जीवब्रह्मभेदे सुसिद्धे
शास्त्रारंभः सार्थको नः सुसिद्धः ।
जीवब्रह्माभेदवादे समोघो
ज्ञानाभावात्स्यादपार्थो विचारः ॥४३॥
मंडने मध्वतंत्रस्य खंडने च सुरद्रुहाम् ।
बनमालिकृतं भाति जिज्ञासान्यायवर्णनम् ॥६॥

---

## जन्मादिन्यायवर्णनम्

श्रीवेदव्यासायनमः । जन्माद्यस्य यतः । पूर्वाधिकरणे ब्रह्मशब्देन जीवब्रह्मभेदमुपपाद्य शास्त्रारंभः समर्थितः । अत्र प्रकारान्तरेण तदेवाक्षिप्य समाधत्ते । यदुक्तं 'तद्विजिज्ञासस्व तद्ब्रह्मेति विचारविधिवाक्ये ब्रह्मपदेनात्र जीवविलक्षणस्य ब्रह्मणोविचार्यस्य समर्पणात्सविषयमिदं शास्त्रमिति । तन्नयुक्तम् तत्र ब्रह्मशब्दस्य जीवपरत्वात् । तथा हि ब्रह्मशब्दस्तावज्जीवस्यापि वाचकः । बृहि बृंहि वृद्धावितिधातोरिव जातिजीवबोधकत्वं रूढ्यैव जीवे गुणपूर्त्यादियोगासंभवात् । परब्रह्मवाचकत्वं तु योगेन, ततश्च रूढेर्योगतो बलवत्त्वादिह ब्रह्मशब्दस्य जीवपरत्वमेव युक्तमिति प्राप्ते सत्यम् रूढिर्बलीयसी इह त्वस्या योगो बाधकः । 'यतो वा इमानिभूतानि जायन्त' इत्यादिश्रुतौ हि ब्रह्मपदं निर्दोषस्य वस्तुनो जगज्जन्मादिकारणत्वं बोधयति तद्विष्णवेकनिष्ठं तल्लक्षणमिति श्रुतिस्मृतिपुराणादिभ्योऽवगतम् । अतः तदनुसारेण योगतः परिपूर्णगुणविष्णुपर एवायं ब्रह्मशब्द इति ।

> वेदे भूरि प्रयोगाच्च गुणायोगाच्च शार्ङ्गिणि ।
> तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥
> यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः ।
> तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ॥

इति गारुडे । ब्रह्मशब्दस्य हरौ मुख्यत्वमन्यत्रामुख्यत्वं स्पष्टम् । ननु ब्रह्मशब्दस्य जीवे रूढिरसिद्धा ।

शरीरबृंहकत्वादिक्लृप्तयोगेनैव तत्र प्रवृत्त्युपपत्ते धात्वंतरस्य चाप्रामाणिकत्वादिति चेत् । किमेवं वदता ब्रह्मशब्दस्य जीवे रूढौ प्रमाणमेव नास्तीत्यभिप्रेतम्, किंवा क्लृप्तावयवशक्त्यैव तत्र प्रवृत्त्युपपत्तौ रूढिर्नांगीकार्येति ? नाद्यः "बृहि बृंहि वृद्धावित्यादिना योगस्येव बृहज्ज्ञातिजीवकमलासनशब्दराशिष्वित्यभिधानेन तत्र जीवेऽपि रूढिसिद्धेः । न च बृंहि वृद्धावित्यादेरिव बृहज्ज्ञातिजीवेत्यादेर्न प्रसिद्धिः । शक्तिग्राहकाभिधानानामनेकत्वेनार्वाचीनानां तदभावनिर्धारणासंभवात् । अन्यथा 'बृहि बृंहि वृद्धावित्यादेरप्यप्रामाणिकत्वापत्तेः । अभियुक्तप्रदर्शितत्वेन तेषां प्रामाणिकत्वे च किमनेनापराद्धम् ? तस्याप्यभियुक्ततमोदाहृतत्वात् । त्वदभिमता एवाभियुक्ततमा नास्मदभिमता इत्युक्तेर्द्वेषमात्रमूलत्वात् । अन्यथा बृंहबृहेत्यादिरप्याधुनिकेन प्रक्षिप्त इत्युक्तौ का प्रत्याशा । न द्वितीयः । देहबृंहकत्वादिमात्रस्य तदनवयवार्थत्वात् । श्रुतिस्मृत्याद्यनुसारेण गुणपूर्त्तेरेव तदवयवार्थत्वाच्च ।

ननु तथापि सिद्धान्तोऽनुपपन्नः । तथा हि यदि जगत्कर्तृत्वानुवादस्य जीवे पर्यवसानायोगाद्विचारविधिवाक्यगतस्य ब्रह्मशब्दस्य रूढार्थोऽपि जीवः परित्यज्यते । तदा अन्नप्राणमनोविज्ञानानन्देषु ब्रह्मशब्दस्य वृत्तिस्त्वया त्यक्ता स्यात् । जीव इव जगत्कारणत्वादेः पर्यवसानासंभवस्य तेष्वपि तुल्यत्वात् । त्वया "एतन्नानावताराणां निधानं बीजमव्ययम्" इत्यादिस्मृत्यनुसारेण मूलरूपेणैव हरेश्चतुर्मुखादिसकलजगत्कारणत्वमुपेयते । न तु प्रतिशरीरं तत्तत्को-

शमात्राधिष्ठानतयाऽभिव्यक्तैरन्नादिरूपैरिति तेष्वप्य-
नुवादयुक्तिस्तुल्यैव। यद्यपि त्वन्मते सर्वाणि भग-
वद्रूपाणि सविशेषाभिन्नानि तथापि तत्तत्कृत्यानि
व्यवस्थितान्येव। न हि रावणवधादिकं शिशुपालवधा-
दिवत्कृष्णचरित्रमध्ये वर्ण्यत इति चेन्न। रूढ्या मूला-
भेददृष्ट्याऽन्नमयादिष्वपि जगत्कर्तृत्ववर्णने बाधका-
भावात्। रावणवधादीनां तत्तद्रूपपुरस्कारेण प्रवृत्त्या
मूलरूपेणाप्रवृत्त्या च युक्तं श्रीकृष्णचरित्रप्रस्तावे रावण-
वधाद्यवर्णनम्, मूलाभेददृष्ट्या च रूपान्तराविष्कृतो
महिमा रूपान्तरे वर्णयितुं युक्त एव।

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते॥

इति श्रीकृष्णवाक्यात्। रावणवधादेः कृष्णरूपा-
विष्कृतचरित्रमात्रसंग्रहप्रस्तावेष्ववर्णनेऽपि सर्वरूपा-
भिन्नपरब्रह्मस्वरूपतया कृष्णवर्णनप्रस्तावेषु कृष्णेऽपि
वर्णनदर्शनाच्च। अतो मूलाभेददृष्ट्याऽन्नमयादिष्वपि
जगत्कर्तृत्वानुवादो युक्त एव।

नन्वेवं जीववर्गेऽपि विश्वकर्तृत्वानुवादो युक्त एव।
ज्ञानानंदादिब्रह्मगुणशालितया ब्रह्माभिन्नो जीव इति त्व-
याऽङ्गीकारात्। "तत्त्वमसि" इति जीवे प्रकृतजगत्कर्तृ-
भावपरामर्शितत्पदोक्तब्रह्माभेदप्रतिपादनस्य, ज्ञानानंदा-
दिगुणैकरूप्यप्रयुक्ताभेदविषयतया "सर्वं खल्विदं ब्रह्म"
इति ब्रह्मणि सर्वप्रपंचाभेदप्रतिपादनस्य, सर्वभूतगुणै-
र्युक्तम्" इतिस्मृतेः पृथिव्यादिगताऽऽधारत्वादिगुणा
ब्रह्मणि सन्तीति तद्गुणैकरूप्यप्रयुक्तपृथिव्याद्यभेदविषय-

तया च त्वया "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदिति सूत्रे व्यवस्थापितत्वाच्चेति चेन्न । सिंहो देवदत्त इत्यादिवद्गौणाभेदस्यैव तद्गुणेत्यादिसूत्रेस्वीकारात् । प्रत्यक्षादिविरोधेन तत्र गौणार्थस्वीकारेऽपि ब्रह्मशब्दस्य मुख्यार्थे बाधकाभावेन गौणार्थकत्वानङ्गीकारात् । नह्यन्नमयादिषु मूलरूपस्य गौणोऽभेदः मुख्याऽभेदे बाधकाभावात् । "अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिश्रुत्याऽन्नादिरूपेष्वपि जगत्कर्तृत्वोक्तेश्च । अन्नप्राणमनोविज्ञानानन्देषु पंचस्वपि ब्रह्मशब्दस्य जगत्कर्तृत्वलक्षणस्य च दर्शनात्पंचापि भगवद्रूपाण्येव । एकं रूपं श्रुत्वा मत्वा साक्षात्कृत्य च रूपान्तराऽऽपरोक्ष्यार्थं भृगोर्वरुणानिकटे पुनः पुनरुपसत्तिः ।

ननु साक्षादेव जीवे विश्वकर्तृत्वानुवादो युक्तः । इत्थं ते मतं स्वप्नध्यानमनोराज्येष्वनुभूयमानाः सरित्समुद्रगिरिनरतुरगादयो न बहिः सन्तः, नापि भ्रान्तिमात्रविषयाः किन्तु स्वप्नादिद्रष्टृपुरुषान्तःकरणगतानादिकालप्रवृत्ततद्विषयानुभवजन्यवासनोपादानास्तदानीमेवान्तरुत्पन्नाः । तत्र ध्यानमनोरथविषयाः पुरुषप्रयत्ननिर्वर्त्या न तु स्वप्नविषयाः । इयांस्तु विशेषः मनोरथादौ प्रयत्नपूर्विका पदार्थसृष्टिः स्वप्ने पुनरीश्वरेच्छाधीनैवेति । एवं ध्यानमनोरथयोरसंभावितविषयः कोऽपि नास्तीति तद्विषयसर्वस्रष्टरि जीवे साक्षादप्यनुवादो युक्त एवेति चेन्न । स्थूलबाह्यप्रपंचस्रष्टृत्वस्य जीवेष्वसत्त्वेन सर्वस्रष्टृत्वानुवादानुपपत्तेः । ध्यानादिहेत्वन्तःकरणादेर्जीवे कर्तृत्वासंभवाच्च । सर्वजगद्विषयकध्यानादेरसर्वज्ञे जीवे एकस्मिन्कुत्राप्यसंभवाच्च ।

ननु स्थूलप्रपंचस्रष्टृत्वमपि जीवस्य संभवति तस्य चिरन्तनहिरण्यगर्भादिजीवध्यानमनोरथप्रभवत्वोपपत्ते-रिति चेन्न। सर्वध्यानमनोरथादिनाध्यान्तरपदार्थानामेव सर्जनात्। अन्यध्यानादिनोत्पादितानां पदार्थानामन्यस्याऽऽपरोक्ष्याऽसंभवात्। अर्थक्रियाकारित्वाऽसंभवाच्च। एतेनातिसूक्ष्मवासनोपादानत्वेऽपि स्वप्नध्यानमनोरथविषयाणां भूगोलमहार्णवादीनामतिमहत्त्वं तेषां च स्वल्पशरीरान्तःस्थानं मूहूर्तमात्रावस्थितेषु स्वप्नध्यानमनोराज्येषु नैकशतवर्षावस्थानमित्यादेरतिदुर्घटस्य दर्शनेन तद्वदेव ध्यानमनोरथप्रभवे प्रपंचेऽपि सर्वापरोक्ष्याद्युपपत्तिरिति निरस्तम्। स्वाप्निकादीनामनुद्भूतगुणकानां महतामप्यन्तःसमावेशोपपत्तेः मुहूर्तमात्रस्थितानां बहुकालस्थायित्वबुद्धेर्भ्रमत्वेनाप्युपपत्तेः। अन्यसृष्टानां स्वाप्निकानां मानोरथिकानामन्यं प्रत्यापरोक्षस्यार्थक्रियाकारित्वस्य चादर्शनेनाघटघटनाकल्पनायां मानाभावात्। स्वाप्निकादिसृष्टेस्तवापि सम्मतत्वाच्च। सत्यत्वं परं त्वया नेष्यते "यत्प्रयन्त्यभिसंविशंतीति मुक्तप्राप्तिरूपसंवेशस्य सर्वजडजीवात्मकप्रपंचलयस्य जीवेऽनुवादस्यानुपपत्तेः। स्वयमलीनस्य सर्वलयाधिकरणस्य च जीवत्वासंभवात्। हिरण्यगर्भादीनां नानात्वेन जीवान्तरध्यानविषये जीवान्तरस्यास्रष्टृत्वात्।

किं च ब्रह्मपदस्य जीवपरत्वे जीवपरयोरभेदो महावाक्यार्थः। स च जगज्जन्मादिकारणत्वजीवत्वापन्नयोर्मुख्यः। स न संभवति। ताभ्यां रूपाभ्यां तयोर्भेदाङ्गीकारात्। अभेदस्य प्रत्यक्षादिबाधितत्वाच्च। ज्ञानानंदत्वादिना गौणाभेदस्य "तद्गुणेत्यादिसूत्रोक्तस्य

त्वयानङ्गीकारात् । ममेष्टापत्तेश्च । तद्ब्रह्मेत्यादौ गौणार्थ-ग्रहणे मानाभावाच्च । एतेनोक्तप्रकारद्वयानङ्गीकारेऽनु-वादब्रह्मपदस्वारस्यविषययोर्जीवपरयोर्विरुद्धधर्मवत्तया— ताभ्यामुपस्थापितयोरपि "यतो वेत्यादि महावाक्यप्रामा-ण्यादत्यन्ताभेदः संभवति । विरुद्धधर्मवत्त्वस्य तयोर-भेदाविरोधिताया आद्याधिकरणे समर्थनादिति निरस्तम् । ब्रह्मपदस्य जीवपरेशाभेदे स्वारस्यस्य त्वदाशामात्रत्वात् । सर्वज्ञत्वाल्पज्ञत्वादीनां भेदकानां सत्त्वाच्च । एतेन यदि विरुद्धधर्मस्याभेदाविरोधित्वं तदा विधेयानुवाद्यरूपतया जीवब्रह्मसमर्पकस्य भागद्वयस्य महावाक्यार्थभूताभेदे विरोधिधर्मद्वयोपस्थापकतया विरोधे सत्यविरोधाय कस्य-चिद्भागस्यार्थबाधेकर्तव्ये विधेयभागस्य तात्पर्यवत्तया प्रबलत्वात्, न विधौ परः शब्दार्थ इत्यनुवादमुख्यत्वाय विधावमुख्यार्थपरिग्रहस्य न्यायाविद्भिर्निराकृतत्वाच्च, अ-नुवादभागस्यैवार्थबाधः प्राप्नुवन्जीवगतध्यानादिविष-यस्रष्टृत्वगोचरत्वलक्षणस्य संकोचरूपबाधस्य त्वदसंम-ततया गत्यन्तराभावाद्ब्रह्मण्येवानुवाद्ये जीवाभेदवि-रोधिजगत्कारणत्वोपमर्दात्मा बाधः प्राप्नोति । दृष्टश्च पूर्व-तंत्रेऽप्यनुवाद्यधर्मस्य विधेयविरोधेनोपमर्दः । तत्र ह्युक्थ्याग्निष्टोमस्तुतशस्त्रं स्यात्सति हि संस्थान्यत्व-मित्यधिकरणे, 'अप्यग्निष्टोमेराजन्यस्य गृह्णीयादप्युक्थ इति राजकर्तृकयोरुक्थ्याग्निष्टोमयोर्विधीयमानः षोडशि-ग्रहः स्तुतशस्त्ररहितः स्यात्तद्वत्त्वे षोडशिसंस्थतयोक्थ्या-ग्निष्टोमसंस्थाभंगप्रसंगेनोक्थ्यस्याग्निष्टोमस्य च सतः षोडशिग्रहविध्ययोगादिति प्राप्ते सिद्धान्तितम्, स्तुतश-स्त्रवत्त्वेन निर्ज्ञातषोडशिग्रहोऽत्र विधीयमानस्तथैव

प्राप्नोति । न च संस्थाभंगो दोषः। पूर्वसंस्थोपमर्देन संस्थान्तरविध्युपपत्तेः ।

उक्थ्यसंस्थो हि यः प्राप्तस्तथाग्निष्टोमसंस्थकः ।
राजन्यस्य तथा नासौ किंतु षोडशसंस्थकः ॥

इत्येव विधेः पर्यवसानादिति । एवं षोडशिग्रहविध्यर्थं प्राप्तेनापि स्तोत्रशस्त्रेण यदा तद्विरोधिनोरनुवाद्ययोरुक्थ्याग्निष्टोमसंस्थयोरुपमर्दस्तदा किमु वक्तव्यं साक्षाद्विधीयमानेन जीवत्वेन तद्विरुद्धस्यानुवाद्यस्य जगत्कारणत्वस्योपमर्द इति । एवं च पूर्वोक्तप्रकारद्वयानंगीकारे जीवपरयोरत्यन्ताभेदप्रसक्त्या त्वदभिमतभेदहानाद्विरुद्धधर्मवतोरत्यन्ताभेदो न संभवतीत्यनुशये ब्रह्मणो जगत्कारणत्वस्यापि हानाच्च त्वन्मतस्य हानिरेवेति निरस्तम् । विरुद्धधर्मवतोरभेदासंभवात् । उक्तन्यायवैषम्याच्च । तथा हि राजन्ये प्राप्तयोरुक्थ्याग्निष्टोमसंस्थयोर्बाधेऽपि न तदनुबंधिविधीनामत्यन्तबाधो धर्म्यन्तरे चरितार्थत्वात्। ब्रह्मणि जगत्कारणत्वबाधे तु सृष्टिप्रलयादिवाक्यानामत्यन्तबाधः स्याद्विषयान्तराभावात् तस्मात् "आनर्थक्यप्रतिहतानां विपरीतमेव बलाबलमिति न्यायाद्विरोधे परस्यापि ब्रह्मशब्दस्य रूढित्यागात् । ब्रह्मपदस्य पूर्णानन्दगुणवत्परत्वेन ब्रह्मपदार्थत्वसर्वजगत्कारणत्वयोरविरोधोपपत्तौ ब्रह्मपदस्य जीवे रूढिमंगीकृत्यानेकश्रुतिविरुद्धस्येश्वराकारणत्वस्यांगीकारानौचित्यात् । यथा हि ह्रदो वह्निमान् इत्यादिशब्दार्थस्य वह्निह्रदसंसर्गस्य बाधेन वह्निह्रदान्यतरपदलक्षणया वाक्यार्थोपपत्तिस्तथात्रान्यतरपदस्य मुख्यार्थं विहायोपपत्तिः कार्या । तत्र जगत्कारणादिशब्दार्थत्यागे उप-

देशो व्यर्थः । जगत्कारणान्यज्ञानस्य मोक्षाहेतुत्वात् । "तमेव विदित्वातिमृत्युमेतीत्यादिश्रुतेः । अतो ब्रह्मपदस्य रूढिं त्यक्त्वा यौगिकार्थमादाय वाक्यार्थोपपत्तिः कार्या ।

यत्तु सृष्ट्यादिवाक्यानां विषयान्तराभावो न दोषः । ब्रह्मणो ऽद्वितीयत्वसिद्ध्यर्थमध्यारोपापवादापेक्षितारोपमात्रेण चारितार्थ्यम् । दृष्टं च अग्निचयनेऽग्निहोत्रे च जर्तिलयवाग्वादिविधिषु तद्वदिहापीति । तत्तुच्छम् । अद्वितीयादिशब्दैर्द्वितीयमात्रनिषेधासंभवात् । तथा हि तैर्द्वितीयाभाव उपलक्षणतया विशेषणतया वा बोध्यते चिन्मात्रं वा । आद्ये द्वितीयाभावेनैव सद्वितीयत्वम्, न चाभावो मिथ्या । प्रतियोगिनः सत्यत्वापत्तेः । न चाभावस्यापि द्वितीयत्वान्निषेधः । मे माता वंध्येत्यादिवत्स्वविहितस्य निषेधस्य निषेधे श्रुतेर्व्याघातापत्तेः । न चाभावो भिन्नः स्वीक्रियते अभावत्वाधेयत्वाधिकरणत्वसप्रतियोगिकत्वादेर्भावस्य सत्त्वेनाद्वैतहानेः । अद्वितीयपदस्य संकोचावश्यकत्वे स्वतंत्रद्वैतनिषेधपरत्वेन संकोचापत्तेश्च वेदान्तानामखंडार्थकत्वहानेश्च । न चाभावोऽधिकरणस्वरूप एवास्तु निरपेक्षसापेक्षयोर्भ्रमकालानिश्चितानिश्चितयोर्ब्रह्मद्वितीयाभावयोरैक्यासंभवात् । न चाभावत्वेन सापेक्षत्वादिकं स्वरूपेण निरपेक्षत्वादिकमिति वाच्यम् । स्वरूपातिरिक्ताभावत्वांगीकारे तेनैवाद्वैतहानेः । नान्त्यः चिन्मात्रबोधस्य द्वैताविरोधित्वात् । नहि धर्मिभूतलादिमात्रज्ञानं घटतदभावान्यतरवत्ताज्ञानविरोधि । अज्ञानाद्यधिष्ठानतया चिन्मात्रस्य सदा भानाच्छास्त्रस्य वैयर्थ्यापत्तेश्च । जर्तिलाद्यर्थवादानां स्तावकानां प्राशस्त्यलक्षणया विध्येकवाक्य-

त्वेन सार्थक्येऽपि सृष्टिवाक्यादीनां वैयर्थ्यापत्तेः। न हि सगुणसप्रपंचसृष्ट्यादिप्रकरणे नियमेन तन्निषेधकं वाक्यमस्ति। किं चेश्वरनिष्ठस्य व्यावहारिकस्यापि जगत्कर्तृत्वादेरसिद्ध्यापत्तेः। न हि जर्तिलादीनां व्यावहारिकं होमकरणत्वं प्रतीयते। न वा तीरतात्पर्यकगंगापदेन प्रवाहबोधो भवति। किं च शास्त्रप्रसक्तस्य न सर्वथा निषेधः। अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीत्यत्रापि षोडशिग्रहणस्य नित्यनिषेधापत्तेः। "न तौ पशौ करोती"त्यत्र विकल्पानुपपत्तेश्च। दर्शपूर्णमासप्रकरणेऽभिहितस्य न तावित्यादिना पशावाज्यभागनिषेधस्य प्रसक्तिरपेक्ष्यते सा च शास्त्रादेव शास्त्रप्राप्तस्य सर्वथा निषेधासंभवादाज्यभागयोर्विकल्प एव पशौ स न स्यादित्यर्थः। अतः प्रसक्तार्थानुमितशास्त्रप्राप्तस्य यदा न सर्वथा बाधस्तदा प्रत्यक्षश्रुतिप्राप्तं न बाध्यते इति किमु वाच्यम्?

किञ्च 'असद्वा इदमग्र आसी'दित्यादिब्रह्मसत्तानिषेधाय 'तत्सत्यं' 'सदेवसोम्येत्यादिवाक्यमारोपपरं किं न स्यात्। अत एकस्य ब्रह्मपदस्य रूढिपालनाय 'यतो वेत्याद्यनुवादस्यानेकसृष्ट्यादिवाक्यानां चोपमर्दनं न युक्तम्। नन्वेकानुरोधेन बहूनामुपमर्दो न युक्त इति; सत्यम्, परन्तु स न्यायस्त्वया तद्ब्रम्हेत्यत्र ब्रम्हशब्दे त्यक्तः। त्वया हि पूर्वाधिकरणे ब्रह्मशब्दस्य जीवब्रह्मभेदसाधकत्वमंगीकृत्य तेनैकेन पूर्वपक्ष्यभिमतसकलाद्वैतश्रुतीनां बाधो वर्णितः। तद्रीत्यैवात्र वक्तुं शक्यम्। तेनैव शब्देन जीवे रूढिन्यायतः प्राप्तेन जगत्कारणब्रह्माभेदबोधनपर्यन्तेन सृष्टिवाक्यादिसर्वद्वैत-

श्रुतीनामुपमर्द इति न ह्ययं ब्रह्मशब्दो यौगिकत्वे बलवान्न तु रूढत्व इति वक्तुं युक्तमिति चेन्न । भेदग्राहकश्रुति-प्रत्यक्षाद्यनुग्रहेणोत्पत्तिशिष्टन्यायादिना ब्रह्मशब्दस्य जीवेशभेदसाधकत्वोक्तेः । पूर्वपक्ष्यभिमतचिन्मात्रपर-वाक्यैर्ब्रह्मपदार्थगुणपूर्तेरविरोधाच्च । 'द्वे ब्रह्मणी वेदि-तव्ये' 'तदेव ब्रह्म परमं कवीनाम्' 'परं ब्रह्म परं धामेत्य-त्रोक्तविद्वद्रूढिं भगवति ब्रह्मपदस्यांगीकृत्य सिद्धान्त-प्रवृत्तेश्च । मुमुक्षुज्ञेयगुणपूर्तिबोधकत्वेन ब्रह्मपदे यौगि-कत्वस्यैवोचितत्वाच्च । अतो यौगिकत्वे ब्रह्मशब्दो बलवान्न तु रूढत्व इत्यपि युक्तम् ।

ननु परमते जीवब्रह्मणोर्विरुद्धधर्मवतोरप्यभेदबोधने लौकिकदृष्टिर्न विरोधिनी तन्मते परमेश्वराचिन्त्याद्भुत-शक्तिमहिम्ना विरोधाभावादिति चेन्न । विरोधोपपादकै-श्वर्यविरोधिनोऽसर्वज्ञाऽभेदस्यैश्वर्येणोपपादयितुमशक्य-त्वात् । यत्तु श्रोत्रैकगम्ये शब्दे रसनेंद्रियस्येव वेदैक-गम्ये ब्रह्मणि मानान्तरस्य साधकत्ववद्बाधकत्वमपि नास्तीति त्वन्मतं 'श्रुतेस्तु शब्दमूलत्वादित्यधिकरणे दर्शितम् । इत्थं हि तदधिकरणम्—ईश्वरो जगत्कर्ता चेत् क्षुद्रकार्येषु कृत्स्नप्रसक्त्या प्रवर्तते तदेकदेशेन वा, नाद्यः स्वल्पकार्ये कृत्स्नप्रसक्त्या प्रवृत्तौ प्रेक्षावत्वहानि-प्रसङ्गात् । न द्वितीयः । तस्य निरवयवत्वात् । तस्मा-ज्जीवस्य स्वतंत्रकर्तृत्वे कृत्स्नप्रसक्त्यादिदूषणं यदुक्तं तदीश्वरेऽपि स्यादिति प्राप्ते, ब्रह्मणि यथाश्रुति यस्य कस्य-चिदर्थस्याङ्गीकारे लौकिकाः शुष्कतर्का न प्रतिभटा भवि-तुमीशते । न हि श्रौत्रैकगम्ये शब्दे चक्षुरादिकं साधकं बाधकं वा भवितुमर्हति । अत एव "योऽसौ विरुद्धो-

ऽविरुद्धो मनुरमनुर्वागवागिंद्रोऽनिंद्रः प्रवृत्तिरप्रवृत्तिरपरः परमात्मेति श्रुतिरेव लोकदृष्ट्या विरुद्धानामपि धर्माणां परमात्मन्यविरोधं बोधयति । तस्मान्मानान्तरगम्यस्य जीवस्य स्वतंत्रकर्तृत्वाङ्गीकार एव कृत्स्नप्रसक्त्यादिलौकिकतर्काः प्रसज्येरन् नेश्वरस्येति । यथाश्रुति निरवयवोऽपि परमेश्वरः कार्यानुरूपमेकदेशेन जगन्निर्माणे प्रवर्तते जीवेनापि निरवयवेनैव कार्यानुरूपमेकदेशेन कृत्स्नप्रसक्त्या वा कारयतीत्यभ्युपगतौ न कश्चिद्दोषः । एवमीश्वरस्य तर्कागोचरत्वं विस्मरसीति तन्न । ईश्वरस्य नित्यनिरवद्यत्वादिबोधकनिर्दुष्टागमानुरोधेनैवासर्वज्ञत्वादिगुणकजीवाभेदानङ्गीकारात् । केवलतर्केणैव भेदानङ्गीकाराच्च । नहीश्वरेऽज्ञत्वसमावेशे श्रुत्यादिविरोधवदुक्तधर्मसमावेशे श्रुत्यादिविरोधोऽस्ति ।

ननु जीवब्रह्मभेदश्रुत्यनुग्राहकत्वेन त्वदभिमतानां विरुद्धधर्मवत्त्वादितर्काणामपवादकत्वेन तदभेदश्रुतिप्राबल्यापादका जीवे प्रत्यक्षसिद्धस्य कर्मकर्तृत्वस्य ब्रह्मणि श्रुतिप्राप्तसृष्टिपालनसंहारादिकत्वस्य च प्रतिक्षेपकतया कर्तृत्वविशेषतदनुबंधिगुणरूपान् जीवब्रह्मणोः सर्वानपि धर्मान् विचाराऽसहान्मिथ्याभूतान्कुर्वन्तः कृत्स्नप्रसक्त्यादितर्का एव श्रुत्यनुग्राहका इत्युपादेयाः । विरुद्धधर्मवत्त्वमूलतर्कास्तदपोदिततया श्रुत्यननुग्राहकाः शुष्कतर्का उपेक्षणीया इति चेन्न । त्वदभिमतजीवेशाभेदश्रुतीनां हि स्वरूपातिरिक्ताभेदपरत्वेऽद्वैतहानेः । स्वरूपाभिन्नाभेदपरत्वे स्वरूपस्य नित्यसिद्धत्वेनोपदेशवैयर्थ्यम् । स्वरूपज्ञानस्य भेदज्ञानाविरोधाच्च । कर्तृत्वादिधर्माणां मिथ्यात्वे तद्बोधक-

श्रुतीनामप्रामाण्यापत्तेः । तर्कहतानां व्यावहारिकत्वस्य व्यावहारिकाणामव्यवस्थायाश्च त्वयानङ्गीकारेण कर्तृत्वादेर्व्यावहारिकत्वस्यापि हान्यापत्तेः श्रुतौ ब्रह्मणोऽवरत्वादिनिर्देशस्तु तस्यावरत्वादेर्नियामकत्वाद्व्यापकत्वाच्चोपपद्यते । 'सर्वं समाप्नोषि ततोऽसि सर्वं' इत्यादिस्मृत्यनुसारात् । अतो जीवेशभेदश्रुत्यनुग्राहकाः विरुद्धधर्मवत्त्वादितर्काः सत्तर्कास्तद्गोचरत्वं ब्रह्मणः स्वीक्रियते । जीवेशाभेदश्रुत्यनुग्राहकास्तर्काः प्रत्यक्षबाधिताः विरुद्धधर्मसमावेशोपपादकैश्वर्यविरुद्धाश्चासत्तर्काः ।

मण्डने मध्वतन्त्रस्य खण्डने च सुरद्रुहाम् ।
वनमालिकृतं भाति जन्मादिन्यायवर्णनम् ॥१॥

इति श्रीमद्वनमालिविरचिते मध्वमुखालङ्कारे
जन्मादिन्यायवर्णनं समाप्तम्



## अथ शास्त्रयोनित्वन्यायवर्णनम्

श्रीकृष्णायनमः । मुमुक्षुज्ञेयजगदुत्पादादिकर्तृत्वं ब्रह्मणोऽसाधारणं लक्षणमुक्त्वा तत्र प्रमाणमाह— शास्त्रयोनित्वादिति । ननु जगदनेककर्तृकं महाकार्यत्वात्, शिवो जगत्कर्ता सर्वज्ञत्वादत एव ब्रह्मापि जगत्कर्तेति कथं विष्णुरेव जगत्कर्तेति प्राप्ते जगत्कारणं धर्मादिवच्छास्त्रैकप्रमाणकमेव नत्वनुमानादिगम्यम् । अनुमानस्योपाध्यादिदोषसंभवात् । शास्त्रेण तु विष्णवेकनिष्ठमेव कारणत्वं प्रतिपाद्यते ।

ननु त्वन्मते शिवादेर्जगत्कर्तृत्वं दुर्वारम् । जगतः सामान्यतोऽनेककर्तृकत्वसाधकानुमानेन विशिष्य शिवादिकर्तृकानुमानेन च तात्पर्यनिर्णायकोपपत्यादिलिंगैश्चानुगृहीतानां 'सदेव सोम्ये'त्यादिवाक्यानामनेकस्रष्टृपरत्वसंभवात् । त्वन्मते हि श्रुतिवाक्यस्यैक एवार्थ इति नियमो नास्ति । 'ज्योतिरुपक्रमात्तु तथा ह्यधीयत एक' इत्यधिकरणे हि तावत्कृत्स्नकर्मकाण्डस्त्वया कर्मब्रह्मोभयपरतया व्याख्यातः । तथाहि—तत्र वसन्तवाक्येषु यथा वसतीति वसः "पचाद्यच्" । तनोतीतितिः औणादिडिप्रत्ययः । पूर्वपदस्य च नकारागमः । वसंश्चासौ तिश्च वसन्तिः । सर्वत्र व्याप्तो वर्तमानो जगत्कर्ता चेत्यर्थः । तत्र संबुद्धिर्वसन्ते द्विरुक्तिरादरार्था, जिजातं पूर्ववज्जनेर्डिप्रत्ययः ओति ओतं अवतेः क्तिः जातं जगत् । ओतं प्रविष्टं यस्मिन्स ज्योतिः, षः प्राणः वेष्टकत्वात् "षकारः प्राण आत्मेतिश्रुतेः । ज्योतिश्चासौ षश्चेति ज्योतिषः

तस्य संबुद्धिर्ज्योतिषेति। आयजेतेत्यपि संबुद्धिः आसमन्तात् यजैः यज्वभिः। इत प्राप्तेत्यर्थः। यजेर्घञर्थे कविधानमिति कप्रत्ययः संप्रसारणाभावश्छान्दसः। इन्द्रागच्छेत्यत्र इन्द्र इति अ इति गच्छ इति संबोधनानि गमेश्छिदेश्च डप्रत्यये सति गं गतं छं छादनं यस्मादसौ गच्छः निरवद्य इत्यर्थः। स्वाहाशब्दे स्वमात्मीयं-यज्ञादिषु दत्तं हविरादि आहरति स्वीकुरूत इति स्वाहः ह्विञो डप्रत्ययः। तदनन्तरं अइति विष्णुनाम तयोः समासे सम्बुद्धिः नमःशब्दे नमतेरधिकरणार्थेऽसुन्प्रत्ययः। नमंति नियमेनास्मिन् वर्तन्ते कल्याणगुणा इत्यर्थः इति। तथोपनिषत्स्वपि अब्रह्मवाचिशब्दा ब्रह्मस्वार्थोभयपरतया व्याकृताः। तद्यथा प्राणो वा आशाया भूयानितिप्रकरणे प्राणशब्दो भूमाधिकरणे ब्रह्मपरतया व्यतीहाराधिकरणे च मुख्यप्राणपरतया व्याख्यातः इत्येवमन्यत्रापीति चेत् 'नामानि सर्वाणि यमाविशन्ति' 'सर्वे वेदा यत्पदमामनन्ती'त्यादि श्रुतेः 'वेदैश्च सर्वैरहमेव वेद्य' इत्यादिस्मृतेश्चानुसारेण ज्योतिरादिशब्दानामन्यपरतया प्रसिद्धानां योगादिना भगवत्परत्वेन वर्णनेऽपि कारणवाचकानां 'सदेव सोम्येदमग्र आसीत्' 'ब्रह्म वा इदमग्र आसीदि'त्यादिसृष्टिवाक्यगतानां सद्ब्रह्मादिशब्दानामन्यपरत्ववर्णनं न युक्तं बीजाभावात्।'

न च श्रुतीनामनेकार्थपरत्वं मन्वानस्य तवान्यपरत्वशंका स्यादेवेति वाच्यम्? 'एको ह वै नारायण आसीन्न ब्रह्मा न च शंकर' इत्यादिविशेषवचनैर्विरोधेनोक्तशङ्कानुदयात्। लोकादितोऽन्यत्र प्रसिद्धानां शब्दानां भगवति सर्वशब्दसमन्वयाय योगादिना

भगवत्परत्ववर्णनेऽपि भगवदेकनिष्ठतया प्रसिद्धाना-मन्यपरतया वर्णने बीजाभावात्। अत एव भगव-देकवाचकतया सुप्रसिद्धानां नारायणादिशब्दानां सम-न्वयो न कीर्तित आकरे। किंचास्तु सृष्टिवाक्यगत-सदादिशब्दानामनेकार्थकत्वं तथापि नानेककर्तृणां सिद्धिः। न हि हर्यादिपदवाच्यस्य मण्डूकादेः सिंहत्वं सिद्ध्यति। एकमेव जगत्कारणत्वादिरूपं धर्मं निमि-त्तीकृत्यानेकत्र प्रकृतौ चानेकार्थकत्वहानिः घटादि-पदतुल्यत्वात्। किं च सृष्टिवाक्यादिप्रतिपाद्या बहवः कर्तारः परब्रह्मरूपाः स्युस्तदैतेषां 'पराऽस्य शक्तिर्विविधैव श्रूयते' इति श्रुतिबलात् प्रत्येकमचिन्त्यापरिमितशक्ति-मतां तेषां सम्भूय स्रष्टृत्वकल्पनमयुक्तम्। लोके प्राकारा-दिषु शिल्प्यादीनां संभूयकारित्वस्याशक्तिनिबंधनत्वात्। अतः सृष्टिवाक्यानामेकस्मिन्नेव स्रष्टरि पर्यवसानावश्यं-भावे विशेषवचनबलान्नारायणपर्यवसानम्। अनेकेषां सर्वनियामकत्वस्य परमस्वातन्त्र्यस्य चासंभवात्।

ननु त्वन्मते चेश्वरस्य जगत्सृष्टौ नियमेन प्रकृत्यादिकमपेक्षमाणस्य तत्रापि प्रकृतिमुपादान-त्वेनैव कालादिकं निमित्तत्वेनैवापेक्ष्य प्रकृत्यैव महान्तं महतैवाहंकारमित्यादिक्रमनियमं वापेक्ष्य सृजतः किं नाम स्वातन्त्र्यम्? स्वातन्त्र्ये सति कदा-चित्प्रकृत्यादिकमनपेक्ष्य निमित्तोपादानकार्यक्रमादिकं व्युदस्य सृष्टिप्रसङ्गादिति चेन्न। प्रकृत्यादीनां तदधी-नानां तत्स्वातन्त्र्याविरोधित्वात्। तन्नियामकत्वेनैश्वर्या-धिक्यसिद्धेश्च। स्वयमेव गन्तुं शक्तस्यापि गमनसमये लीलया दण्डावष्टंभवत्स्वेच्छामात्रेण प्रकृत्यादिकं स्वा-

धीनं जगत्सृष्ट्यादौ स्वीकुर्वतः स्वातन्त्र्याविरोधात्। न चैवं प्रत्येकमखिलजगत्सृष्टिशक्ता अपि परमेश्वराः केवलं लीलया संभूय जगत्सृजन्तीति वक्तुं शक्यमिति वाच्यम्। अनेकेषां परमस्वातन्त्र्यासंभवेन तादृशलीलाया असंभवात्। 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते। तस्मान्मायी सृजते विश्वमेतादित्यादिश्रुतेः।

'मयाऽध्यक्षेणप्रकृतिः सूयते सचराचरम्।
प्रकृतिं पुरुषं चापि प्रविश्यात्मेच्छया हरिः।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ॥

इत्यादिस्मृतेश्चानुरोधेनेशाधीनप्रकृतिपुरुषयोरंगीकारेपि नानेश्वरांगीकारे मानाभावात्। 'द्यावाभूमी जनयन्देव एक' इत्यादिश्रुतिविरोधाच्च। न च कर्त्रैक्यश्रुतिर्ब्रह्मविष्णुशिवानां मध्ये एकैकस्यैव कर्तुः 'तदैक्षत बहुस्यां प्रजायेय' इत्यादिषु श्रुतैर्बहुभवनमुखैरुपस्थापिताया भेदप्रसक्तेर्निवारणेनार्थवतीति वाच्यम्। भवनकर्तृनिष्ठबहुत्वशंकाया भवनप्रयोजककर्तृनिष्ठैकत्वज्ञानेनाविरोधात्। नह्येक एव कुलालो घटं जनयति स्वयं न बहुभवतीत्यत्रविरोधगंधोऽस्ति। ईश्वरीयबहुभवनमात्रनिषेधपरतया संकोचे मानाभावाच्च।

ननु तथापि न त्वन्मते परमेश्वरैक्यसिद्धिः— तथाहि 'यो वै भूमा तत्सुखमित्यादिश्रुतौ भूमशब्दस्तवापि ब्रह्मपरः। तत्रायं त्वन्मते विशेषः बहोर्लोपो भूचबहोरिति भावे निष्पन्नोऽपि भूमशब्दो 'यो वै भूमा तदमृतमित्यादिषु धर्मिण्येवप्रयोगाद्धर्मिण्येव रूढः। तस्य च परब्रह्माणि धर्मिणि वैकुंठे प्रवृत्तौ निमित्तं अवधिविशेषगणनानिरपेक्षपूर्णत्वं नत्व-

स्मादेवायं पूर्ण इति प्रतियोगिविशेषापेक्षम् । प्रकरणोपपदादिसंकोचकाभावात् । नामवागाद्युत्तरोत्तरोत्कृष्टनिरूपणे चरमकक्षापन्नत्वान्नाल्पे सुखमस्तीति-निरुपपदेनाल्पपदेन सर्वस्याप्यल्पस्य प्रतियोगित्वेन निर्देशाच्च । तच्च निरवधिकं पूर्णत्वं न धर्मिण एव परममहत्त्वरूपं किन्तु तत्तद्गुणानामानंदादीनां निरतिशयत्वरूपम् । 'वाग्वाव नाम्नो भूयसीत्यादौ वैपुल्यरहितेषु वाक्संकल्पध्यानादिष्वपि तत्र प्रकरणे भूमशब्दसमानार्थकभूयःशब्ददर्शनेनात्रापि तदैकरूप्याय गुणतो वैपुल्यस्यैव तदर्थतौचित्यात् । तच्च पूर्णत्वं सर्वेषामधिकारिणां नैकप्रकारेण श्रवणमननध्यानसाक्षात्कारेषु प्रतीयते, किन्तु तत्तद्योग्यतानुसारिणा तारतम्येन । न च पूर्णत्वे तारतम्यस्यासंभवः । क्षणानन्त्य इव तदुपपत्तेः । अस्ति हि पूर्वोत्तरकल्पापेक्षयाऽतीतक्षणेषु सतोरानन्त्ययोस्तारतम्यमिति तदेतद्भूमाधिकरणादौ स्पष्टम् ।

तत्रेदमुच्यते । इयत्तापरिच्छेदराहित्यमात्ररूपं संभवति तारतम्यमानन्त्ये । न तु निरतिशयत्वसर्वोत्तमत्वसर्वोत्कृष्टत्वापरपर्यायतया तेष्वधिकरणेषु त्वयोद्घोषिते भूमब्रह्मशब्दयोः प्रवृत्तिनिमित्ततया त्वदभिमते ब्रह्मानन्दादीनां पूर्णत्वे निरतिशयत्वस्य व्याघातात् । नहि ये तारतम्यशालिनस्ते निरतिशयाः सर्वोत्तमा इति च युज्यते तेषु यस्य यदपेक्षया निकर्षस्तस्य तेन सातिशयस्योत्तमत्वस्य चावर्जनीयत्वात् । यद्युच्येत परमेश्वराचिन्त्यशक्तिमहिम्ना तदानंदादिविशेषाणां परस्परतारतम्यवतामपि निरतिशयत्वादि संभ-

वतीति तदा परमेश्वराणामचिंत्यशक्तिमहिम्ना परस्परं भिन्नानामप्येकत्वं संभवतीति किमिति वक्तुं न शक्यम् ? तस्मात्परब्रह्मानन्दैकदेशात्सातिशयत्वेन भूम्न एव भूमरूपतया तत्तदधिकारिणं प्रति भूमशब्दः प्रतिपादयतीति त्वया वक्तव्यमिति ।

अत्रोच्यते । परब्रह्मानंदादेर्भूमशब्देन तारतम्येनाधिकारिणं प्रति बोधनेऽपि न सातिशयत्वाद्यापत्तिः तस्यैक्यात्तदेकदेशिनोरभेदात् । ब्रह्मानंदादेरुत्कृष्टत्वं तु जीवानन्दाद्यपेक्षया । तच्च तत्तदधिकारिभिर्ज्ञेयं सर्वदेशेषु प्रत्येकमपि सर्वघटादिषु घटत्वादिवत्पर्याप्तम् । एकस्य घटस्य तदेकदेशस्य वा दृष्टे स्पृष्टे च घटत्वं दृष्टं स्पृष्टं यथा तथा ब्रह्मानन्दाद्येकदेशे ज्ञाते प्राप्ते वोत्कृष्टं ज्ञातं प्राप्तं च भवत्येव । भूमब्रह्मादिशब्दैः सर्वानधिकारिणः प्रति पूर्णत्वप्रकारक एव बोधो जन्यते तारतम्यन्तु संसर्गविधया भासते तद्बोधकपदाभावात् । किंच लोके परस्परतारतम्यवतामपि शरावकरकघटतडागसमुद्रादीनां पूर्णत्वव्यवहारोऽपि दृश्यते । एतादृशपूर्णत्वं तु जीवेष्वेव नतु ब्रह्मानन्दादिषु, तेषामभिन्नत्वात् भूमादिशब्दैः पूर्णत्वेनैव बोधनात् ।

एतेनेश्वराणां मध्ये यदुपासने यस्य पुरुषस्यानादियोग्यता स एव जगत्कर्ता नान्य इति तस्य स्फुरतीति तत्तदधिकारिबुद्धिविषयं तमेवार्थं तस्याधिकारिणः श्रवणकर्तृबुद्धिभेदेन भिन्नं भिन्नं कर्त्रैक्यश्रुतिरनुवदतीत्येव वा तन्निर्वाहोऽस्तु । न च श्रुतीनामनेकार्थकत्वसंप्रतिपत्तावपि श्रोतृभेदेन भिन्नभिन्नार्थबोधकत्वं न संप्रतिपन्नमिति वाच्यम् ? 'आत्मेत्येवोपासीत' इति-

विधौ तव तत्संप्रतिपत्तेः। इत्थं हि तव मतं ब्रह्मोपासनायामधिकारिणस्तावदुपास्यगुणभेदेन त्रिविधाः। सत्यज्ञानानन्दादिभिरल्पैर्गुणैर्मर्त्याः संभूतिद्युव्याप्त्यादिभिः सहितैर्भूयोभिर्गुणैरिन्द्रादिदेवाः अखिलैर्गुणैश्चतुर्मुखादयः देवेषु मर्त्येषु च स्वस्वभाविमुक्त्यर्थोपासनीयगुणविशेषोपसंहारानुपसंहाराभ्यां गुणभूयस्त्वाल्पत्वावान्तरभेदैस्त्वतिबहवोऽधिकारिणः सर्वान्प्रति तत्तद्योग्यगुणविशिष्टब्रह्मोपासनाभेदानां विधायकं 'आत्मेत्येवोपासीत' इत्यादि वाक्यम्, तत्र देवेषु मर्त्येषु च यावद्गुणोपासने योग्यता तं प्रति तावद्गुणविशिष्टं ब्रह्म आत्मशब्दोभिधत्ते एवकारस्तदयोग्यगुणव्यवच्छेदकः। चतुर्मुखादीन्प्रति सर्वगुणविशिष्टं ब्रह्माभिधत्ते। एवकारस्तदयोगव्यवच्छेदक इति निरस्तम्।

उपासनाविधिवाक्यस्य पुरुषभेदेन विरुद्धानेकार्थप्रतिपादकत्वं हि युक्तम्। अनुष्ठाने विकल्पसंभवात्। नतु वस्तुपरस्य कारणवाक्यस्य विरुद्धानेकार्थकत्वं वस्तुनि विकल्पाभावात्। उपासनावाक्यस्य हि तत्तत्पुरुषं प्रति तत्तद्योग्यगुणविशिष्टमेव ब्रह्मोपासनीयं नायोग्यगुणविशिष्टमिति बोधकत्वे च न प्रामाण्यं हीयते, हीयते तु 'सदेव सोम्येदम्' इति वस्तुपरवाक्यस्य। तत्तत्पुरुषं प्रति शिव एव जगत्कर्ता नान्य इत्यादिबोधकत्वे पुरुषभेदेनानुष्ठानभेदवद्वस्तुभेदासंभवात्। यत्तु त्वया पुराणेषु रामकृष्णाद्यवताररूपाणां भेदश्रवणं लौकिकैर्भ्रान्त्या गृहीतस्य भेदस्यानुवादकमित्युक्तत्वेन तथैव कर्त्रैक्यश्रुतेरनुवादकत्वोपपत्तिरिति। तत्तुच्छम्। अवतारेषु तत्कालवर्तिनां लौकि-

कानां केषांचिद्भेददृष्टिसंभवेनान्येषां च बहुत्वलिंगाभासेन भेदधीसंभवेनानुवादकत्वसंभवेऽपि जगत्कत्रैक्यस्य श्रुतिं विना प्राप्त्यभावेन तदैक्यश्रुतेरनुवादकत्वासम्भवात् ।

ननु त्वया पुरुषाणां योग्यतावन्माहात्म्यज्ञानपूर्वकस्नेहरूपा भक्तिरप्यनादिरिति, "स्थानविशेषात्प्रकाशादिवत्" "अनुबन्धादिभ्य" इत्यधिकरणयोरुक्तत्वेन शिवादिभक्त्यन्तर्गतस्य शिव एव जगत्कर्ता नान्य इत्यादिरूपेण तत्तन्माहात्म्यज्ञानस्याप्यनादित्वं सर्वेषां मतानामनादित्वस्योक्ततया तत्तन्मताहितमाहात्म्यज्ञानपरंपरानादित्वसंभवाच्चेति चेन्न । मोक्षेऽपि विद्यमानाया अविनाशिन्या उक्तभक्तेरनादित्वेऽपि शिव एव जगत्कर्ता नान्य इति ज्ञानस्यानादित्वे मानाभावात् शिवोत्पत्त्यादिबोधकवाक्यविरोधाच्च । श्रुतिविरुद्धानामनादीनामपि मतानामर्थासाधकत्वाच्च । यत्तु—

यदा तमस्तन्न दिवा न रात्रि-
र्न सन्नचाऽसच्छिव एव केवलः ।
तदक्षरं तत्सवितुर्वरेण्यं
प्रजा च तस्मात्प्रसृता पुराणी ॥

"प्रजापतिर्वा इदमेक आस नाहरासीन्न रात्रिरासीत् सोऽस्मिन्नन्धे तमसि प्रासर्पदि"त्यादीनि शिवविरिंचयोरपि जगत्कर्तृत्वमावेदयन्तीति कथं विष्णोरेव जगत्कर्तृत्वमिति । तत्तुच्छम् । ब्रह्मणो रात्रौ त्रिलोकीप्रलयरूपायां शिवादेरवस्थानेनावान्तरकल्पाभिप्रायेणोक्तश्रुत्युपपत्तेः ।

प्रकृतिं पुरुषं चापि प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥
प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाऽप्युभावेतौ लीयेते परमात्मनि ॥
परमात्मा च सर्वेषामाधारः पुरुषोत्तमः ।
स विष्णुनामा वेदेषु वेदान्तेषु च गीयते ॥
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
बुद्धिर्मनो महद्वायुस्तेजोऽम्भः खं मही च या ॥
चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् ।
चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः ॥
प्रभवश्च स सर्वेषां निधनं च युधिष्ठिर ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥

इत्यादौ हरेः प्रकृतिक्षोभकत्वसर्वजगल्लयाश्रयत्व-सर्वभूतोत्पादकत्वादिप्रसिद्धेरेव वेदेतिहाससात्त्विक-पुराणादिषु शिवविरिंचादौ तथा प्रसिद्धेरलीकत्वात् । "यो ब्रह्माणं विदधाति" "यस्य अक्षात् शूलपाणिरजा-यत" "नारायणाद्रुद्रो जायत" इत्यादौ ब्रह्माद्युत्पत्ति-वत्सृष्टिप्रकरणे वेदेतिहाससात्त्विकपुराणेषु विष्णो-रुत्पत्त्यश्रवणाच्च । क्वचिद्रुद्रादेः संहारकत्वोक्तिस्तु तत्प्र-विष्टनारायणाभिप्राया ।

सर्गस्थितिविनाशांस्तु भगवान्मधुसूदनः ।
तैस्तै रूपैरचिन्त्यात्मा करोत्यव्याहतान्विभुः ॥
जुषन्रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः ।
ब्रह्मा भूत्वाऽस्य जगतो विसृष्टौ सम्प्रवर्तते ॥

सृष्टं च पात्यनुयुगं यावत्कल्पविकल्पना ।
सत्वभुग्भगवान्विष्णुरप्रमेयपराक्रमः ॥
तमोद्रेकाच्च कल्पान्ते रुद्ररूपी जनार्दनः ।
मैत्रेयाखिलभूतानि भक्षयत्यतिभीषणः ॥

इत्यादिस्मृत्या पृथ्व्यादाविव रुद्रादौ हरेरंशावेश उक्तः अतस्त्वदुदाहृतश्रुतिनिष्ठशिवपदं कल्याणादिकं निमित्तीकृत्य विष्णुपरमेवातः सुसिद्धं जगदुदयादिकर्ता विष्णुरेव नान्य इति ।

मण्डने मध्वतन्त्रस्य खण्डने च सुरद्रुहाम् ।
वनमालिकृतं भाति शास्त्रयोनिनिरूपणम् ॥

इति श्रीमद्वनमालिविरचिते मध्वमुखालंकारे
शास्त्रयोनित्वन्यायनिरूपणं समाप्तम् ।

——:०:——

# अथ समन्वयन्यायनिरूपणम्

श्रीकृष्णाय नमः ॥ तत्तु समन्वयात् । ननु कारणत्वस्य शास्त्रयोनित्वेऽप्यतिव्याप्तिः । शैवाद्यागमाद्वेदव्याख्यानरूपाद्रुद्रादेरपि तत्सम्भवादिति प्राप्ते, व्याख्यातृवचनानां यैर्लिङ्गैरुपक्रमादिभिस्तात्पर्यनिर्णयस्तैरेव श्रुतीनामपि । ननु यद्यप्युपक्रमादयो विष्णौ व्यवस्थापिताः स्युस्तथापि ते श्रुतीनां विष्णुपरत्वावगमनमेव कुर्युर्न तु शिवविरिंचपरतानिवारणमपि । अनेकार्थसहिष्णोस्तव मते विरोधाभावेन शिवविरिञ्चिपरत्वस्यापि संभवात् । नहि प्रबलं प्रबलमित्येव दुर्बलस्य बाधकमपि तु सति विरोध इति चेन्न । "वेदैश्च सर्वैरहमेव वेद्य" इत्याद्यनुसारेणान्यपरतया लोके प्रतीयमानानां शब्दानां विष्णुपरत्ववर्णनेऽपि सृष्टिवाक्यानां "द्यावाभूमी जनयन्देव एक" इत्येकस्रष्टृमात्रपरतया निश्चितानामनेकार्थकत्वे मानाभावात् । उक्तश्रुतिविरोधाच्च । श्रुतीनां शिवविरिञ्चादिपरत्वे तदेकवाक्यतापन्नोपक्रमादीनां विष्णौ व्यवस्थितानामन्वयानापत्तेश्च ।

ननु माभूत्तेषां विष्णावन्वयः । नहि त्वन्मते क्वचिदर्थे यावतामेकवाक्यता तावतामर्थान्तरेऽप्येकवाक्यतेतिनियमोऽस्ति । श्येनादिपदानां ब्रह्मपरत्वे प्रसिद्धश्येनसादृश्यप्रतिपादकवाक्यशेषान्वयाभावादिति चेत् । न । असतिबाधक एकान्वयस्य त्यागानौचित्यात् । वाक्यशेषस्यापि ब्रह्मपरत्वेन तदेकवाक्यतासम्भवाच्च । नच कर्मकाण्डस्थपदानां पदविधयैव ब्रह्मणि समन्वयो न

वाक्यविधयेति वाक्यान्वयसूत्रे त्वया वर्णितत्वादिति वाच्यम् । पदविधया वाक्यशेषस्य ब्रह्मणि समन्वयेऽप्येकार्थकत्वरूपैकवाक्यताया अविघातात् ।

ननूपक्रमादीनां विष्णौ व्यवस्थितत्वमप्यासिद्धम् । शैवादयोपि ह्युपक्रमादीनेवालम्ब्य श्रुतीनां शिवादिपरत्वं वर्णयन्ति । उपपादयन्ति चोपक्रमादीनां शिवादिविषयत्वं तद्गतपदशक्त्यादिप्रदर्शनेनेतिचेत् । उच्यते । शैवाः शिव एवोपक्रमो न विरिञ्चे चेति वर्णयन्ति । एवं वैष्णवादयः परपक्षप्रतिक्षेपेण वदन्ति । नचैतानि मतानि परस्परविरुद्धानि सर्वाण्यपि ग्राह्याणि । अतोऽत्रबलाबलविचारावश्यंभावाद्बलवद्भिर्न्यायैरुपक्रमादीनां विष्णौ व्यवस्थितत्वासिद्धिः । यत्तु यथा भूमशब्दस्तत्वाऽशेषविशेषसहितब्रह्मानंदवाचकोऽपि तत्तदधिकारिणं प्रति योग्यतानुसारेण किंचित्किंचिद्ब्रह्मानन्दांशमेव बोधयति । तथा सृष्ट्यादिश्रुतयस्तदुपक्रमादयश्च नैककर्तृपरा अपि तत्तद्योग्यतानुसारेणैकैकमेव कर्तारं बोधयन्ति, श्रुतिवाक्येभ्यस्तेषां कर्त्रन्तरबोधानुदयात्तु श्रुतिवाक्यानां कर्त्रन्तरपरत्वाभावाभिमान इत्युपपत्तेः । तस्मादुपक्रमादिबलान्न सृष्टिवाक्यानां विष्णौ व्यवस्थितत्वमिति । तत्तुच्छम् । भूमशब्दो हि सर्वोत्कृष्टत्वापरपर्यायपूर्णत्ववाचकः पूर्णत्वेनैव सर्वान्प्रत्यानन्दान्बोधयति । यस्य स्वयोग्यतानुसारेणानन्दादयो भासन्ते तस्योत्कृष्टत्वेनैव नत्वपकृष्टत्वेन, भगवद्गुणस्यानन्दादेरैक्येनोत्कर्षापकर्षाऽसम्भवात् । किञ्च वैष्णवशैवादिपुराणादौ शिवादीनां परस्परसृज्यत्वसंहार्यत्वाऽऽराध्यत्वाऽऽराधकत्वादिना भूयसी निकर्षोक्तिर्दृश्यमाना

सर्वेषां समानकर्त्तृतया जगत्कर्तृत्वानुपपत्त्या बलाबल-विचारं विना न व्यवतिष्ठते। तद्विचारे च वैष्णव-पुराणादेः सात्त्विकत्वाद्बलवत्त्वात्तदनुसारेणोपक्रमादि-सहितानां सृष्टिस्थित्यादीनां विष्णौ व्यवस्थितत्वं सिद्ध्येत।

ननु परस्परनिंदावचनानि "नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते ऽपि तु स्तुत्यं स्तोतुम्" इतिन्यायेनोदि-तानुदितहोमनिन्दादिषु दृष्टेन तत्तद्देवताविषयनिश्चल-भक्तिसिद्धिप्रयोजने स्तुतिविरचने द्वारमात्रत्वेनो-पपन्नानि

अथैककालिको वाहमेकैकस्मिन्दिनत्त्रये।
चरन्भैक्ष्यं मुहुर्मुहुः त्तपयिष्ये कलेवरम्॥

इत्युक्तवन्तं ज्ञातिवधनिर्वेदात्संन्यासोद्यमं कुर्वन्तं युधिष्ठिरं प्रति तद्भ्रातॄणां मुनीनां श्रीकृष्णस्य च संन्यासनिन्दावचनानि गार्हस्थ्योत्कर्षवचनानि च भारते दृश्यन्ते। त्वया तु गार्हस्थ्यात्संन्यासस्यैवोत्कर्षः स्वीक्रियते। अतो युधिष्ठिरं संन्यासोद्योगान्निवारयितु-मेव तानि वचनानि गार्हस्थ्यप्ररोचनापराणि। एवं पुराणादिषु तत्तद्देवताराधनोपासनाद्यनुष्ठापनार्थं प्रवृत्तेषु तत्प्ररोचनार्थं देवतान्तरानिकर्षो वर्ण्यते। अङ्गीकृतं च त्वयापि 'द्वेषाच्चैद्यादयो नृपा' इत्यादौ भगवतः कृपालु-त्वातिशयतात्पर्येण द्वेषान्मुक्तिवर्णनं नतु नरकसाधनेन भगवद्द्वेषेण मुक्तिरस्तीति वदता पुराणेष्वन्यार्थतात्पर्ये-णासदर्थकथनमितिचेन्न। स्यादेवं विष्णुं शिवं विरिचं च प्रतिपादयितुमसाधारण्येन प्रवृत्तानां पुराणानां गतिः। साधारणतया प्रवृत्तस्य सर्वेश्वरं बोधयितुं कः

सर्वेश्वर इति सामान्यतः प्रश्नो विशिष्योत्तरमितिरीत्या प्रवृत्तस्य भारतस्य तथागत्यसंभवात् । तथाहि—

गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः ।
यदीच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः ॥
कुतो ह्यस्य ध्रुवः स्वर्गः कुतो निःश्रेयसं परम् ।
विधिना केन जुहुयाद्दैवं पित्र्यं तथैव च ॥
मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः ।
स्वर्गतश्चैव किं कुर्याद्येन न च्यवते दिवः ॥
देवतानां च को देवः पितॄणां च पिता तथा ।
तस्मात्परतरं यच्च तन्मे ब्रूहि पितामह ॥

इति सामान्यतः प्रश्नानन्तरं विष्णुरेव सर्वेश्वर इति निर्धारणेन नारायणीयाख्यानप्रवृत्तेः । तथाहि—

सिद्धा ह्येते महाभागाः पुरा ह्येकान्तिनोऽभवन् ।
तमोरजोभिर्निर्मुक्ता मां प्रवेक्ष्यन्त्यसंशयम् ॥
न दृश्यश्चक्षुषा योऽसौ न स्पृश्यः स्पर्शनेन च ।
न घ्रेयश्चैव गन्धेन रसेन च विवर्जितः ॥
सत्त्वं रजस्तमश्चैव न गुणास्तं भजंति वै ।
यश्च सर्वगतः साक्षी लोकस्यात्मेति कथ्यते ॥
पुरुषो निष्क्रियश्चैव ज्ञानदृश्यश्च कथ्यते ।
यं प्रविश्य भवन्तीह मुक्ता वै द्विजसत्तमाः ॥
स वासुदेवो विज्ञेयः परमात्मा सनातनः ।
नच जीवं विना ब्रह्मन्वायवश्चेष्टयन्त्युत ॥
स जीवः परिसंख्यातः शेषः संकर्षणः प्रभुः ।
यस्मिंश्च सर्वभूतानि प्रलयं यान्ति संक्षये ॥
स मनः सर्वभूतानां प्रद्युम्नः परिपठ्यते ।
तस्मात्प्रसूतो यः कर्ता कारणं कार्यमेव च ॥

तस्मात्सर्वं सम्भवति जगत्स्थावरजंगमम् ।
सोऽनिरुद्धः स ईशानोव्यक्तः सर्वेषु कर्मसु ॥
यो वासुदेवो भगवान्क्षेत्रज्ञो निर्गुणात्मकः ।
ज्ञेयः स एवं राजेन्द्र जीवः संकर्षणः प्रभुः ॥
सङ्कर्षणाच्च प्रद्युम्नो मनोभूतः स उच्यते ।
प्रद्युम्नाच्चानिरुद्धः स ईश्वरः परिकथ्यते ॥
ललाटाच्चैव मे रुद्रो देवः क्रोधाद्विनिःसृतः ।
मया सृष्टः पुरा ब्रह्मा मां यज्ञमयजत्स्वयम् ॥
ततस्तस्मिन्वरान्प्रीतो दत्तवानस्म्यनुत्तमान् ।
त्वया कृतां च मर्यादां नातिक्रंस्यति कश्चन ॥
त्वं चैव वरदो ब्रह्मन्वरेप्सूनां भविष्यसि ।
विविधानां च भूतानां त्वमुपास्यो भविष्यसि ॥
प्रादुर्भावगतश्चाहं सुरकार्येषु नित्यदा ।
अनुशास्यस्त्वया ब्रह्मन् नियोज्यश्च सुतो यथा ॥
एतांश्चान्यांश्च रुचिरान्ब्रह्मणेऽमिततेजसे ।
अहं दत्वा वरान्प्रीतो निवृत्तिपरमोऽभवम् ॥
अस्मिन्मूर्तिश्चतुर्थी या साऽसृजच्छेषमव्ययम् ।
स हि संकर्षणः प्रोक्तः प्रद्युम्नं सोऽप्यजीजनत् ॥
प्रद्युम्नादनिरुद्धोऽहं सर्गो मम पुनः पुनः ।
अनिरुद्धात्तथा ब्रह्मा तन्नाभिकमलोद्भवः ॥

इत्यादिवचनैर्नारदं प्रति श्रीनारायणेन स्वस्य सर्वोत्तमत्वं स्वयमुक्तम् ।

अनिरुद्ध इति प्रोक्तो लोकानां प्रभवाप्ययः ।
ब्राह्मे रात्रिक्षये प्राप्ते तस्य ह्यमिततेजसः ॥
प्रसादात्प्रादुरभवत्पद्मं पद्मनिभेक्षणात् ।
ब्रह्मा समभवद्तस्स स तस्यैव प्रसादजः ॥

अन्हः क्षये ललाटाच्च सुतो देवस्य वै तदा ।
क्रोधाविष्टस्य संजज्ञे रुद्रः संहारकारकः ॥
एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजावुभौ ।
तदादेशितपन्थानौ सृष्टिसंहारकारकौ ॥
निमित्तमात्रं तावत्र सर्वप्राणिवरप्रदौ ॥

तथा रुद्रं प्रति ब्रह्मोक्तिः—

अहं प्रसादजस्तस्य कस्मिंश्चित्कारणान्तरे ।
त्वं चैव क्रोधजस्तात पूर्वसर्गे सनातनः ॥
मया च सार्धं वरदं विबुधैश्च महर्षिभिः ।
प्रसादयाशु लोकानां शान्तिर्भवतु मा चिरम् ॥
ब्रह्मणा चैवमुक्तस्तु रुद्रः क्रोधाग्निमुत्सृजन् ।
प्रसादयामास ततो देवं नारायणं प्रभुम् ॥
शरणं च जगामाद्यं वरेण्यं वरदं प्रभुम् ।
अहो नारायणं तेजो दुर्दर्शं द्विजसत्तमाः ।
यत्राविशंति कल्पान्ते सर्वे ब्रह्मादयः सुराः ॥

मुक्तानां हरिरेव प्राप्य इत्याह—

ये हि निष्कलुषा लोके पुण्यपापविवर्जिताः ।
तेषां वै क्षेममध्वानं गच्छतां द्विज सत्तम ।
सर्वलोकतमो हन्ता आदित्यो द्वारमुच्यते ॥
आदित्यदग्धसर्वांगा अदृश्याः केन चित् कचित् ।
परमाणुभूता भूत्वा तं देवं प्रविशन्त्युत ॥
तस्मादपि विनिर्मुक्ता अनिरुद्धतनौ स्थिताः ।
मनोभूतास्ततो गत्वा प्रद्युम्नं प्रविशंत्युत ॥
प्रद्युम्नादपि निर्मुक्ता जीवं संकर्षणं ततः ।
विशन्ति विप्रप्रवराः सांख्या भागवतैः सह ॥

ततस्त्रैगुण्यहीनास्ते परमात्मानमंजसा ।
प्रविशन्ति द्विजश्रेष्ठाः क्षेत्रज्ञं निर्गुणात्मकम् ॥
सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्वतः ।
समाहितमनस्काश्च नियताः प्रयतेंद्रियाः ॥
एकान्तभावोपगता वासुदेवं विशंति ते । इति ॥

सात्विकस्यैव मुमुक्षोर्विष्णोराराधने मतिर्न तामसादेरित्याह—जनमेजय उवाच—

एवं बहुविधं धर्मं प्रतिबुद्धैर्निषेवितम् ।
न कुर्वन्ति कथं विप्रा अन्यनानाव्रते स्थिताः ॥

वैशंपायन उवाच—

तिस्रः प्रकृतयो राजन्देहबन्धेषु निर्मिताः ।
सात्विकी राजसी चैव तामसी चैव भारत ॥
देहबन्धेषु पुरुषः श्रेष्ठः कुरुकुलोद्वह ।
सात्विकः पुरुषव्याघ्र भवेन्मोक्षाय निश्चितः ॥
अत्रापि स विजानाति पुरुषं ब्रह्मवित्तमम् ।
नारायणपरो मोक्षस्ततो वै सात्विकःस्मृतः ॥

इति श्रीनारायणपरायणस्यैव मोक्ष इत्युक्तम् । हरिमोहितानां हरौ भक्तिर्न भवतीत्याह—

इत्थं हि दुश्चरो धर्म एष पार्थिवसत्तम ।
यथैव त्वं तथैवान्ये भवन्तीह विमोहिताः ॥
कृष्ण एव हि लोकानां भावनो मोहनस्तथा ।
तथा संहारकश्चैव कारणं च विशांपते ॥ इति ॥

तथा स्थलान्तरे सामान्यतः प्रश्नानन्तरं विशिष्य हरेरेव सर्वेश्वरत्ववर्णनम् । तथाहि जनमेजय उवाच—

बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।
को ह्यत्र पुरुषश्रेष्ठः का वा योनिरिहोच्यते ॥

वैशम्पायन उवाच—

बहूनां पुरुषाणां च यथैका योनिरुच्यते ।
तथा तं पुरुषव्याघ्र व्याख्यास्यामि गुणाधिकम् ॥

इति प्रतिज्ञाय रुद्रसंवादेन सर्वकारणं निरूपयति । एकदा क्षीरोदमध्ये वैजयन्तपर्वते समाधिं कुर्वाणं ब्रह्माणं प्राप्य रुद्रो नमस्कृत्य तेनाभिनन्दित उवाच—

बहवः पुरुषा ब्रह्मंस्त्वया सृष्टाः स्वयंभुवा ।
सृज्यन्ते चापरे ब्रह्मन्स वै कः पुरुषो विराट् ॥
कोऽसौ विचिन्त्यते ब्रह्मंस्त्वयैकः पुरुषोत्तमः ।
एतं मे संशयं छिन्धि महत्कौतूहलं हि मे ॥

ब्रह्मोवाच—

बहवः पुरुषाः पुत्र ये त्वया समुदाहृताः ।
एवमेतदतिक्रान्तं द्रष्टव्यं नैवमित्यपि ॥
शृणु पुत्र यथा ह्येष पुरुषः शाश्वतोऽव्ययः ।
अक्षयश्चाप्रमेयश्च सर्वगश्च निरुच्यते ॥
स न शक्यस्त्वया द्रष्टुं मयान्यैर्वापि सत्तम ।
सगुणैर्निर्गुणैर्विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ॥
एवं हि परमात्मानं केचिदिच्छन्ति पण्डिताः ।
एकात्मानं तथात्मानमपरे ज्ञानचिन्तकाः ॥
तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः ।
स हि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः ॥
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ।
कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते ॥

इति निर्गुणत्वं प्राकृतसत्वादिगुणराहित्येन "सत्वादयो न सन्तीशे यत्र च प्राकृता गुणाः" इति वैष्णवोक्तेः ।

ऋग्वेदे सयजुर्वेदे तथैवाथर्वसामसु ।
पुराणे सोपनिषदे तथैव ज्योतिषेऽर्जुन ॥
सांख्ये च योगशास्त्रे च आयुर्वेदे तथैव च ।
बहूनि मम नामानि कीर्तितानि महर्षिभिः ॥

इति भगवद्वचनेन;

वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥

इति हरिवंशवचनेन च वेदादीनामुपक्रमोपसंहारादीनि तात्पर्यलिंगानि विष्णावेवेति सिद्धम् ।

यत्तु श्रीकृष्णेनावतारांतरेण च रुद्रः पूज्यते तत्तु पृथ्वादाविव तत्र जीवविशेषे स्वांशावेशाभिप्रायेण, शिवादेः क्वचिन्नारायणाभेदोक्तिरपि तदभिप्राया । पुत्रादीनि फलानि कामयमानान्जनान्रुद्रादिपूजायां प्रवर्तयितुं च क्वचित्पूज्यते । एतदेवाह भगवान्—

अहमात्मा हि लोकानां विश्वानां पाण्डुनन्दन ।
तस्मादात्मानमेवाग्रे रुद्रं संपूजयाम्यहम् ॥
यद्यहं नार्चयेयं वै ईशानं वरदं शिवम् ।
आत्मानं नार्चयेत्कश्चिदिति मे भावितं मनः ॥
मया प्रमाणं हि कृतं लोकः समनुवर्तते ।
प्रमाणानि हि पूज्यानि ततस्तं पूजयाम्यहम् ॥
नहि विष्णुः प्रणमति कस्मैचिद्विबुधाय च ।
ऋते आत्मानमेवेति ततो रुद्रं भजाम्यहम् ॥
सब्रह्मकाः सरुद्राश्च सेंद्रा देवाः सहर्षिभिः ।
अर्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिम् ॥
भविष्यतां वर्ततां च भूतानां चैव भारत ।
सर्वेषामग्रणीर्विष्णुः सेव्यः पूज्यश्च नित्यशः ॥इति॥

अतोऽसाधारण्येन प्रवृत्तानां पुराणादीनां नहि निन्दे-त्यादिन्यायविषयत्वेऽपि साधारणतया सामान्यप्रश्न-विशेषोत्तराभ्यां प्रवृत्तस्य भारतस्य न तन्न्यायविषय-त्वम् । अन्यथा त्वदभिमतनिर्गुणविद्यादेरपि तन्न्याय-विषयत्वापत्तेरिति ॥

मण्डने मध्वतन्त्रस्य खण्डने च सुरद्रुहाम् ।
वनमालिकृतं भाति समन्वयनिरूपणम् ॥

इति श्रीमद्वनमालिविरचिते मध्वमुखालंकारे
समन्वयनिरूपणं समाप्तम् ।

## अथेक्षतिन्यायवर्णनम्

श्रीकृष्णाय नमः। ईक्षतेर्नाऽशब्दम्। नन्ववाच्यमेव ब्रह्मेति कथं तत्र समन्वयः? 'यतो वाचो निवर्तन्ते' इति श्रुतेरिति प्राप्ते। ब्रह्माऽशब्दं शब्दावाच्यं न। 'परात्परं पुरिशयं पुरुषमीक्षते' इति तद्विषयकेक्षणश्रवणात्। तच्चौपनिषदस्य ब्रह्मणो वेदनैवेति।

ननु त्वन्मतेऽप्यवाच्यत्वं ब्राह्मणः स्यात्। तथाहि—

यथा जीवानन्दादेरन्यद्ब्रह्म तथोपासनाकाले प्रतीतादप्यन्यदेवेति त्वयांगीकृतम्। "यन्मनसा न मनुते येनाहुर्मनो मतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति श्रुतौ ब्रह्मण उपास्यत्वप्रतिषेधात्। जीवानंदादिष्वल्पत्वस्येवोपासनाकाले प्रतीते व्यक्तत्वादेर्हेतोः सत्वाच्च। व्यक्तत्वं ब्रह्मणस्त्वया 'तथान्यनिषेधादित्यधिकरणे निराकृतम्। तस्मादुपासकानां हृदयेषु ब्रह्मणः प्रतिबिंबविशेष एवोपासनालम्बनम्। तदुपासनयैव च प्रतिमोपासनयेव तद्गतं ब्रह्म प्रसन्नं सदव्यक्तमप्याचिन्त्यापरिमितस्वशक्तिबलादपरोक्षीभवती–ति युक्तम्। तथैव ब्रह्मतर्कवचनम्—

पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिंबितम्।
ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदम्॥
तदुपासनं च भवति प्रतिमोपासनं यथा।
दृश्यते त्वपरोक्षेण ज्ञानेनैव परं पदम् इति॥

एवमनुपास्यं ब्रह्मेत्यङ्गीकुर्वता त्वयोपासनाविधिप्रकरणेषूपास्यसमर्पकाणां श्रुतिवचनानां तद्वाच्यं न

भवतीत्यङ्गीकार्यम्। तद्वाच्यत्वाङ्गीकारे कथं तदनुपास्यत्वमितिचेत्।

अत्रोच्यते। यद्यच्छ्रवणजनितवासनया मनोमयवस्तुनोऽवलोकनं तत्तस्य ध्यानमिति हि नः सिद्धान्तः। 'श्रवणदर्शनादिजनितमानसवासनामयस्य वस्तुनो मनसाऽवलोकनं ध्यान' मिति न्यायसुधोक्तेः। उक्तध्यानस्य गुरुमुखाद्वाक्यार्थग्रहणरूपश्रवणघटितत्वेन श्रवणस्य तु ब्रह्मणो वाच्यत्वं विनाऽसंभवेन तस्य वाच्यत्वसिद्धिः। यथा प्रतिमायां क्रियमाणार्चा तस्थतया चिन्त्यमानस्य देवस्यैव न तु प्रतिमायास्तथोक्तध्यानं बिम्बस्यैव न तु मनसा कल्पितवस्तुनः, अतो न श्रवणमननिदिध्यासनानां भिन्नविषयकत्वं नवा प्रतिबिंबे शास्त्रसमन्वयशंका। 'आत्मानमुपासीतेत्यादिश्रुतेस्त्वात्मश्रवणजनितमनोमयवस्त्ववलोकनं कुर्यादित्यर्थः। इदं श्रवणजनितमनोमयवस्तु यदुपासतेऽवलोकन्ते तद्ब्रह्म न, किन्तु यच्छ्रुत्वा तत्सदृशमनोमयमूर्तिः कल्प्यते तदेव ब्रह्म त्वं विद्धीति श्रुत्यर्थः। ध्यातारो यच्चित्ते प्रतिबिंबितं यदीया प्रतिमा चित्ते कल्पिता तत्परमं ब्रह्म पश्यन्ति प्रसादेनापरोक्षीकुर्वन्ति यद्यतः प्रतिबिंबे आविर्भूय ब्रह्मैव तेषां ध्यातॄणां फलप्रदमतस्तस्योपासनं भवति प्रतिमायामुपासनं यथा तद्वत्। तत्प्रसादयुतेनापरोक्षेण पश्यन्तीति ब्रह्मतर्कवाक्यार्थः। विजातीयप्रत्ययानन्तारितसजातीयप्रत्ययप्रवाहो निदिध्यासनापरपर्यायो ध्यानम्। तच्च प्रतिबिंबांशे मानसापरोक्षम्, बिंबांशे स्मरणम्। 'यन्मनसा न मनुते' इत्यादिश्रुत्या ध्यानकालिकमानसवृत्त्यविषयत्वम्, 'मनसैवानुद्रष्टव्यम्' इत्याद्यया च

ध्यानपरिपाके सतीश्वरप्रसादेन मानसवृत्तिविषयत्वं बोध्यते ।

यत्तु "यद्वाचानभ्युदितं येन वागभ्युद्यते । तदेव-ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इतिमंत्रान्तरं ब्रह्मणो वाच्यत्वं प्रतिक्षिपतीति । तन्न । यदादिपदा-वाच्यत्वे उद्देश्यज्ञानासंभवेन तत्र वाच्यत्वाभावविधानासंभवात् । तदेवेत्यादेर्व्याघाताच्च । सर्वशब्दा-वाच्यस्य लक्षणाया अदर्शनान्न लक्षणयापि तद्बोधः । अवाच्यलक्ष्यादिपदलक्ष्यत्वे गंगापदलक्ष्यतीरादेरगंगात्व-वद्वाच्यत्वादिकमेव स्यात् । तद्वाच्यत्वे त्वागतमेव वाच्यत्वम् ।

यत्तु स्रष्टृत्वादिप्रतिपादकानां श्रुतिपुराणेतिहासा-गमादीनां सर्वेषामप्युपास्यत्वेन त्वदभिमते प्रतिबिंब-विशेष एव पर्यवसानं स्यादिति तत्रैव वाक्यशेषादि-भिर्यूपाहवनीयादिन्यायेन ग्राह्मव्युत्पत्तिकानां ब्रह्म-नारायणादिपदानां शक्तिः स्यादिति । तत्तुच्छम् । जीवतः कवेराशयस्यावर्णनीयत्वात् । अस्माभिः प्रति-बिंबपदार्थस्य परब्रह्माभिन्नत्वस्यानुपास्यत्वस्य च स्वीका-रात् । किंचैवं 'तदेव ब्रह्म त्वं विद्धीत्यादिष्वपि ब्रह्म-पदादेरब्रह्मविषयत्वापत्तेः । नच प्रतिबिंबवाचकानां ब्रह्मादिपदानां बिंबभूतब्रह्मलक्षकत्वोपपत्तिरिति वा-च्यम् ? गंगापदलक्ष्यस्य तीरादेरगंगात्ववद्ब्रह्मपदल-क्ष्यस्याब्रह्मताया दुर्वारत्वात् । प्रतिबिंबस्यैव मुख्य-ब्रह्मत्वापत्तेश्च । एतेनेत्थमत्र तव मतं पर्यवस्येत वाङ्म-नसपथातीतं नित्याव्यक्तमुपासनानन्तरं मुच्यमानानां मुक्तानां च साक्षात्कारस्यैव विषयभूतं परं ब्रह्म 'तदेव

ब्रह्म त्वं विद्धीत्यादिभिः कैश्चिदेव वचनैर्लक्षणया प्रतिपाद्यं तस्य प्रतिबिंबाविशेषस्तु जीववदनादिः कर्तृत्वादिमानुपासकहृदयेषूपास्यरूपेणाभिव्यक्तिशाली श्रुत्यादिभिस्तदनुसारिपुराणादिभिश्च शक्त्या प्रतिपाद्यत इति निरस्तम्। जीवत्कवेराशयस्य त्वादृशेनैव वर्णनीयत्वात्, अस्माभिः सदनन्तगुणालयस्य विश्वोदयादिकर्तुरेव परब्रह्मरूपस्यैवेयत्तयोपासनायां भानानङ्गीकारात्। स्वयोग्यान्सर्वगुणान्श्रुत्वा तेषां परोक्षज्ञानधारां सम्पाद्य ध्यानं कार्यम्। ध्याने तु चित्तस्वच्छतानुसारेण कतिपयगुणानां भानम्, स्वयोग्याशेषगुणभानं तु तत्प्रसादादापरोक्ष्य एवेति नः सिद्धान्तात्। उक्तं हि न्यायसुधायां 'जीवशक्त्यापरोक्षव्यक्तोऽपि स्वशक्त्यैव दृश्यत' इति।

मण्डने मध्वतन्त्रस्य खण्डने च सुरद्रुहाम्।
वनमालिकृतं भाति हीक्षतिन्यायवर्णनम्॥

इति श्रीमद्वनमालिकृते मध्वमुखालङ्कारे
ईक्षतिन्यायवर्णनं समाप्तम्।

———o———

# अथ शेषब्रह्ममीमांसातात्पर्यवर्णनम्

श्रीकृष्णाय नमः ।

पंच न्यायाः समीचीनं वर्णिता वनमालिना ।
मायावादिमुखं भङ्क्त्वा मध्वतंत्रस्य मण्डने ॥
शेषग्रन्थस्य तात्पर्यं समासेन निरूप्यते ।
मायावादिमुखध्वंसः प्रसङ्गाद्धरितुष्टये ॥

"तत्तु" समन्वयादित्यनेनोपक्रमादितात्पर्यलिंगैर्मुख्य वृत्त्या समन्वयः सिद्धवदुपन्यस्तो नतु तत्रोपक्रमादिर्विष्णावेव व्यवस्थित इति न्यायैः स्थापितम्, तद्यावद्वाक्यविशेषानुपहृत्य पूर्वोत्तरपक्षग्रथनेन समन्वयो न प्रपंच्यते तावदयमनुपन्न्यस्तप्राय एव । अन्यथा शैवादयोऽपि समन्वयादित्येव सिद्धवदुपन्यस्य शिवादीनां शास्त्रगम्यत्वं प्रसाधयेयुरतः समन्वयविभागेन तत्प्रपंचनार्थमध्यायशेष आरभ्यते ।

यत्तूपरितनेष्वधिकरणेषु विष्णौ समन्वयप्रपंचनरूपः सिद्धान्तः सृष्ट्यादिवाक्यरूपशास्त्रप्रतिपाद्यत्वं विष्णोर्न संभवतीति पंचमाधिकरणदूषणेन ग्रस्तो नोन्मज्जनमर्हतीति । तत्तुच्छम् । सदनन्तगुणालयस्य विश्वोदयादिकर्तुः परब्रह्मण एवोपास्यत्वस्य सृष्ट्यादिवाक्यगतपदवाच्यत्वस्य व्यवस्थापितत्वात् । एतेन तत्तद्वाक्यानां तत्तदधिकरणपूर्वपक्षोपपादितदेवतान्तरपरत्वस्य निराकरणमप्यनुपपन्नम् । विष्णौ समन्वितानामपि तत्तद्वाक्यानां तृतीयचतुर्थाधिकरणदूषणोक्तरीत्या देवतान्तरपरत्वस्यापि सम्भवादिति निरस्तम् ।

तुल्यवृत्त्या विष्णावन्यत्र चान्वयाभावात्। अन्यत्र व्यवहाराय यथाकथंचिदन्वितानामपि मुख्यवृत्त्या विष्णौ समन्वयस्य समर्थनीयत्वात्। तस्यैव समन्वयसूत्रे संशब्देन प्रतिज्ञातत्वात्। तत्तदधिकरणविषयवाक्येषूपक्रमोपसंहारादिगतानां विष्णुविषयकश्रुतिलिंगानां निरवकाशत्वेन प्राबल्यम्। देवतान्तरविषयश्रुतिलिंगानां विद्वद्रूढ्या महायोगेन प्रवृत्तिनिमित्तताद्धीन्येन तत्तदन्तर्यामिगतत्वेन च विष्णौ सावकाशत्वेन दौर्बल्यं चेति हि तत्तदधिकरणेषूपपाद्यम्। देवतान्तरविषयश्रुतीनां विद्वद्रूढ्यादिभिर्विष्णौ परममुख्यतया प्राबल्यम्, प्रसिद्धार्थेष्वज्ञरूढ्या केवलयोगेन प्रवृत्तिनिमित्ताश्रयत्वेन मुख्यमात्रतया दौर्बल्यं चोपपाद्यम्। न च श्रुतेरनेकार्थकत्वं वदतस्तव विरोध एव नास्तीति वाच्यम्। तुल्यवृत्त्याऽनेकार्थकत्वस्यानङ्गीकारात्। अन्यत्र योगेन हरौ महायोगेनान्यत्राज्ञरूढ्या विष्णौ विद्वद्रूढ्याऽन्यत्रोपचाराद्धरौ मुख्यतयेति ह्यस्माकं रीतिः।

ननु विद्वद्रूढ्यादयस्तव विष्णौ कुतो व्यवस्थिताः? येन देवतान्तरविषयश्रुत्यादीनां हरौ सावकाशता, येन प्रसिद्धेषु स्वार्थेषु परममुख्यत्वाभावेन च दौर्बल्यं भवेत्। विष्णुरेव जगत्कर्तृ परं ब्रह्मेत्यवधारणाधीनं हि तद्व्यवस्थितत्वम्। अन्यथा विरिंच एव विद्वद्रूढ्यादय इतिवक्तारं को वारयेदिति चेत्। न। "यो ब्रह्माणं विदधाति" "हिरण्यगर्भः समवर्तताग्रे" "तस्य ललाटाच्छूलपाणिरजायत" इत्यादिश्रुत्या विरिंचादेरुत्पत्तेरुक्त्या सर्वेश्वरत्वासंभवेनोपक्रमाद्यविषयत्वात्। "आनन्दमयोऽभ्यासात्" इत्यत्र जगत्कर्तृत्वादिना प्रतिपादि-

तोऽन्नमयादिर्विष्णुरेवेति साध्यं ब्रह्मशब्दाभ्यासं हेतूकृत्य, ब्रह्मशब्दस्य यद्यप्यन्यत्राप्यज्ञरूढ़िस्तथापि तस्य विष्णौ "तदेव ब्रह्म परमं कवीनाम्" इतिश्रुत्योपदर्शिता विद्वद्रूढ़िः प्रबलेति सैव निर्णयहेतुः।

नच तदेव ब्रह्मेतिश्रुतिर्विष्णवेकपरेति कुतोऽवसेया? "यमन्तःसमुद्रे कवयो वयन्ति" इति प्रसिद्धतल्लिगात्। ननु "प्रजापतिश्चरति गर्भे अन्तः" "हिरण्यगर्भ इत्यष्टौ" इतिहिरण्यगर्भप्रजापतिश्रुतिभ्यां विरिंचैकपरा सा कुतो नावसेया? कुतश्च 'हिरण्यगर्भ इत्यष्टावित्यनेन गृहीतात् "य ईशे अस्य द्विपदश्चतुष्पदः" इति पशुपतित्वलिंगात् "पुरुषस्य विद्महे सहस्राक्षस्य महादेवस्य धीमही" त्याद्युपसंहाराच्च सा शिवैकपरा वा नावसेयेति चेन्न।

"परमं यो महद्ब्रम्ह परमं यः परायणम्।
पवित्राणां पवित्रं यो मंगलानां च मंगलम्॥
दैवतं देवतानां च भूतानां योऽव्ययः पिता।
यतः सर्वाणि भूतानि भवन्त्यादियुगागमे।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये॥
तस्य लोकप्रधानस्य जगन्नाथस्य भूपतेः। विष्णोः"

इत्यादिस्मृत्युपबृंहितया 'तदेवेति श्रुत्या ब्रह्मपदस्य विष्णावेव विद्वद्रूढ़िसिद्धेः। नचेयं स्मृतिर्विष्णुस्तुत्यर्था।

को धर्मः सर्वधर्माणां भवतः परमो मतः।
किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात्॥

इति सामान्यतः प्रश्नोत्तरतयाऽस्याः प्रवृत्तेः। एवं सामान्यतः प्रश्नोत्तरस्य विशेषेण शिवादीश्वरत्वबोधकवचनस्य भारते दुर्लभत्वात्। किञ्च तत्तद्वाक्यगत-

ब्रह्मशब्दानामप्यनेकार्थकत्वे 'तदेव ब्रह्म परम' मित्य-
वधारणासंगतिः स्यात्। न च तस्य त्वन्मते भूमशब्द-
रीत्या पुरुषभेदेन व्यवस्थितार्थबोधकत्वसंभवः। ब्रह्मा-
दिशब्दैः शिवादेः पूर्णत्वसर्वोत्कृष्टत्वादिरूपब्रह्मत्वादि-
बोधने शिवाद्युत्पत्तिलयादिबोधकश्रुतिस्मृतीतिहासादि-
विरोधवद्भूमशब्देन ब्रह्मानंदादीनामधिकारिभेदेन
तारतम्येन बोधने बाधकाभावात्। किंच न प्रजापतिर्ब्रह्म-
शब्दार्थः। "ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण
आनन्द" इतिब्रह्मप्रजापत्योरानन्दोत्कर्षापकर्षश्रवणात्।
नच "ब्रह्म पुच्छं प्रतिष्ठा" इति ब्रह्मानन्दयोरवयवावय-
वित्वश्रवणेऽप्यानन्दमयस्यैव प्रजापतेरपि ब्रह्मत्वोप-
पत्तिः, त्वया ब्रह्मानन्द एव तारतम्यवदत्यन्तविशेषवत्त्व-
स्याङ्गीकृतत्वेनैकस्मिन्नुत्कृष्टापकृष्टानन्दवत्त्वं न भवतीति
वक्तुं न शक्यमिति वाच्यम्। अवयवावयवित्वस्य
सर्वेषां मते विवक्षितत्वात्। प्रजापत्यानन्दोत्कर्षादेर्वि-
वक्षितत्वाच्च। अवयवावयविनोरभेदस्यावाभ्यां स्वीकृत-
त्वात्त्वया च विषमसत्ताको भेदो मया भेदप्रतिनिधिरव-
यवावयविनोः स्वीक्रियते। अधिकारिभिः स्वयोग्यतानु-
सारात्तारतम्येन ब्रह्मानन्दादेर्ग्रहणेऽपि तस्यैक्येनोत्कर्षा-
पकर्षयोरसत्वात्।

न च 'अन्योऽन्तर आत्मा प्राणमयः" इत्यादिसा-
क्षाद्भेदश्रवणमविगणय्यान्नमयादीनामभेदमंगीकुर्वतस्तव
भेदश्रवणस्यात्यन्तमनादरणीयत्वं स्यादिति वाच्यम्।
अन्नमयादीनां ब्रह्माभेदसाधकस्य ब्रह्मसमभिव्याहारस्य
"एतमन्नमयमात्मानमुपसंक्रम्य" इतिमुक्तप्राप्यत्वादेश्च
सत्वेन श्रूयमाणभेदत्यागेऽपि ब्रह्मप्रजापत्योरभेदसाधका-

भावेन श्रूयमाणभेदस्यागानौचित्यात् । एवमग्रिमाधिकरणविषयवाक्यस्य तत्तद्देवतानिराकरणमपि साधु संगच्छते । नच त्वन्मतेऽन्नमयादिष्विव ब्रह्मानन्दमययोरिव च भेदभेदकव्यपदेशयोरुपपन्नत्वेन तत्तद्देवता विषयप्रसिद्धश्रुतिलिंगादिस्वारस्यानुरोधेन तत्तद्विषयवाक्यस्य पूर्वपक्ष्यभिमततत्तद्देवतापरत्वमनिवार्यमिति वाच्यम् । "अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते" "एतमानंदमयमात्मानमुपसंक्रम्य" इत्यादेरन्नमयादौ ब्रह्माऽभेदबोधकमुक्तप्राप्यत्वाद्यसाधारणब्रह्मलिंगादिना विष्णुपरत्ववद्देवतान्तरस्य ब्रह्मणा सहाऽभेदबोधकमानाभावात् ।

किंच सर्वेष्वधिकरणेषु साधारणेन ब्रह्मलिंगादिना विष्णुपरत्वनिर्णयः पूर्वपक्ष्यभिमततत्तद्देवताविषयश्रुतिलिंगानां प्रवृत्तिनिमित्ततादधीन्यादिभिः सावकाशत्वेन निराकरणम्, दृश्यते च यथा 'आकाशस्तल्लिंगादित्यधिकरणे । 'अस्य लोकस्य का गतिरित्याकाश इति होवाच' इत्यादिविषयवाक्यस्य 'स एष परोऽवरीयानुद्गीथः स एषोऽनन्त" इत्यादिवाक्यश्रुतपरोवरीयस्त्वाद्यसाधारणब्रह्मलिंगेन विष्णुपरत्वनिर्णयः । आकाशश्रुतेस्तत्प्रवृत्तिनिमित्ततादधीन्यादिना विष्णुवाचकत्वसम्भवेन सावकाशतयाऽन्यपरत्वनिराकरणं च तथा 'ज्योतिश्चरणाभिधाना' दित्यधिकरणे "वि मे कर्णापतयतो विचक्षुर्वीदं ज्योतिर्हृदय आहितं यदि"ति मंत्रस्य कर्णादिविरुद्धचरणेन कर्णाद्यपरिच्छेद्यत्ववैभवस्वरूपेणासाधारणेन ब्रह्मलिंगेन विष्णुपरत्वनिर्णयः । तन्मंत्रगतज्योतिः श्रुतज्योतिःप्रकरणसम्पादकतत्पूर्वापरमन्त्रगत

श्रुतीनां च पूर्ववद्विष्णौ सावकाशतया निराकरणं 'छन्दोऽभिधानादित्यधिकरणे। 'गायत्री वा इदं सर्वं भूत' मित्यादिविषयवाक्यगतस्य गायत्रीशब्दस्य गानत्राणकर्तृत्वाद्यसाधारणब्रह्मलिंगादिभिर्विष्णुपरत्वनिर्णयः। गायत्रीश्रुतेः पूर्ववद्विष्णौ सावकाशत्वेन निराकरणम्। 'प्राणस्तथानुगमादित्यधिकरणे "ता वा एताः शीर्षञ्छ्रिताश्चक्षुः श्रोत्रं मनो वाक्प्राण" इत्याद्यैतरेयब्राह्मणे श्रुतस्य प्राणशब्दस्य "तं देवाः प्रणयन्तं भूरिति तं देवा उपासां चक्रिर" इत्यादिश्रुतेर्देवोपास्यत्वादिब्रह्मलिंगैर्विष्णुपरत्वनिर्णयः। तत्र यन्मुख्यप्राणलिंगम् "ता अहिंसन्ताहमुक्थमस्मीति प्राण उदक्रामदित्यादौ श्रुतमिंद्रियैः सह कलह उत्क्रमणं प्रवेशः इत्यादि, यच्च तत्र 'त्वामेव विजानीयामिति पृष्टवन्तं विश्वामित्रं प्रति प्राणो वाहमस्मीति इन्दुवचनं तत्सर्वमन्तर्यामिविषयतया सावकाशमिति निराकरणम्। एवं द्वितीयपादाद्यधिकरणेष्वपि तत्तद्विषयवाक्यानां ब्रह्मलिंगादिभिर्विष्णुपरत्वनिर्णयः। अन्यविधेयकश्रुतिलिंगानां सावकाशतया निराकरणमिति सिद्धान्ते विष्णोरेव सर्ववैदिकशब्दसमन्वयः।

नन्विदमव्याप्यसिद्धं शिवादिविषयत्वमपि संभवतीतिशंकाग्रस्तत्वात्। तन्निराकरणार्थमेव त्वया प्रथमाध्यायशेषस्यारब्धत्वादिति चेन्न। विष्णुरेव विश्वोदयादिकर्ता सर्वेश्वरो न शिवादय इत्यस्य शास्त्रयोन्यधिरणसमन्वयाधिकरणाभ्यामेव सिद्धत्वात्। प्रथमाध्यायशेषेण श्रुतिलिंगादिना जीवादिविशेषपरत्वेन प्रतीयमानानां शब्दानामुपक्रमादिलिंगैः सावकाशत्व-

निरवकाशत्वादिन्यायैश्च जीवपरत्वं निराकृत्येश्वरपरत्वस्य प्रतिपादनात् ।

ननु क्वित्रेष्वधिकरणेषु त्वया विष्णुश्रुतिलिंगानि सन्तीति लिखित्वा तैर्निर्णयः कृतोऽपि दृश्यते यथा 'अन्तस्तद्धर्मोपदेशा' दित्यधिकरणे—

अन्तः प्रविष्टं कर्तारमेत—
मन्तश्चन्द्रमसि मनसा चरन्तम् ।
सदैव सन्तं न विजानन्ति देवा—
इन्द्रस्यात्मानं शतधा चरन्तम् ॥

इत्यादिमन्त्रगतस्यान्तःप्रविष्टत्वस्य विष्णुपरत्वे "अन्तः समुद्रे मनसा चरन्तं यस्याण्डकोशं शुष्ममाहुः प्राणमुल्वम्" इति समुद्रशायित्वब्रह्माण्डवीर्यत्वरूपं विष्णुलिंगमस्तीति यथा वा 'त एव प्राण' इत्यधिकरणे "तद्वै त्वं प्राणोऽभवः महाभोगः प्रजापतेः भुजः करिष्यमाणः यद्देवान्प्राणयो न वेति प्राणशब्दस्य विष्णुपरत्वे "श्रीश्च ते लक्ष्मीश्च पत्न्या" विति तत्पूर्वानुवाकश्रुतं लक्ष्मीपतित्वलिंगमस्तीति । यथा च "शब्दादेव प्रमित" इत्यधिकरणे "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य स एवाद्य स उ श्वः" इति मन्त्रगताङ्गुष्ठमात्रशब्दस्य विष्णुपरत्वे—

"ऊर्ध्वं प्राणमुन्नयति अपानं प्रत्यगस्यति ।
मध्ये वामनमासीनं विश्वे देवा उपासते ॥

इति मन्त्रश्रुतवामनश्रुतिरस्तीति—

अभावो रुद्रादेः प्रलयसमये वेदशिखरै-
रभाणि श्रीशस्य प्रथितवचनैनैव गदितः ॥

जनिर्वैकुण्ठेशाद्विशदमुदिता सृष्टिसमये
रमेशादन्योऽतः कथमिह परेशः खलु भवेत् ॥

समुद्रशायित्वादिविष्णुलिंगप्रतिद्वंद्वि "अन्तश्चन्द्रमसि मनसा चरन्तमन्तरादित्ये मनसा चरन्त" मित्यष्टमूर्तेः शिवस्यापि लिंगमस्तीति विष्णुपरत्वपरिपंथिनी "प्रजापतिश्चरति गर्भे अन्तरिति प्रजापतिश्रुतिरस्ति । वामनश्रुतिप्रतिद्वन्द्वि "भूतभव्यस्य ईशान" इति शिवश्रुतिरस्तीति कथमुदाहृतश्रुतिलिंगैर्विष्णवेकपरत्वनिर्णय इति चेत् ।

अत्रोच्यते । शिवादेरीश्वरत्व "मेको वै नारायण आसीन्न ब्रह्मा न च शङ्कर" इति श्रुत्या—

ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित् ॥

इत्यादीतिहासोपबृंहितया निराकृतम् । अन्तर्याम्यन्तरधिष्ठितस्य जीवविशेषस्य शिवादेर्जीवविशेषचन्द्राद्यन्तश्चरणस्य तन्नियामकत्वरूपस्यासम्भवात् । प्रजानां निरतिशयपतित्वस्य विष्णावेव सम्भवात् । 'ज्येष्ठः श्रेष्ठः प्रजापति'रिति प्रजापतिशब्दस्य विष्णावेव विद्वद्रूढेः सत्वाच्च । भूतभव्येशानत्वस्यापि जीवविशेषे निरवकाशत्वेन विष्णावेव सावकाशत्वाच्च । "ईशानः प्राणदः प्राणः" इतीशानपदस्य विद्वद्रूढेर्विष्णावेव सत्वाच्च । भूतभव्यशब्दसमभिव्याहारेणेशानपदस्य शिवे रूढ्यसंभवाच्च । नचैवं वामनशब्दोऽपि प्राणापानमध्यस्थतोक्त्या पूर्वापरमन्त्रेषु बहुधाङ्गुष्ठमात्रतोक्त्या च ह्रस्वत्वपरो न तु विष्णौ रूढि-

मानिति त्वदभिमतश्रुतेरपि हानिः स्यादिति वाच्यम् । भूतभव्यस्येति षष्ठ्या भूतभव्यकर्मकेशानकर्तृत्वबोधवत्प्राणापानमध्यस्थत्वोक्त्याऽङ्गुष्ठमात्रत्वोक्त्या च न नियमेन ह्रस्वत्वधीः । 'उपेन्द्रो वामनः प्रांशु'रितिस्मृतेरार्षप्रसिद्धेर्वामनशब्दो विष्णौ रूढः । एवं च यथा "यद्योन्यां तदुत्तरयोर्गायतीत्यत्रोत्तराशब्द उत्तराग्रन्थे संज्ञारूपो निरपेक्ष इति तत्पर एव न तु योनिऋग्रूपप्रतियोगिसापेक्षोत्तरऋक्परस्तथा वामनशब्दोऽपि रूढ्या विष्णुपरो न तु दीर्घप्रतियोगिह्रस्वत्वपर इति । अंगुष्ठमात्रत्वं च मूर्तिविशेषस्य व्यक्त्यात्मनांऽगुष्ठमात्रस्थानस्य हृदयस्य तद्गते ब्रह्मण्युपचाराद्वा युक्तम् । किंच यस्य शब्दस्य प्रवृत्तिनिमित्तं यदाश्रितं तस्यैवार्थस्य स शब्दो वाचक इति न नियमः । किन्तु यस्य शब्दस्य प्रवृत्तिनिमित्तमाश्रितत्वेन यथेष्टविनियोक्तृत्वरूपस्वातन्त्र्यविषयत्वेन वा यदधीनं तस्यार्थस्य स शब्दो वाचक इति । अत एव भृत्यगतस्य विजयस्य राजाधीनाश्रितत्वेऽपि तदधीनत्वमात्रेण राजा जयतीत्यपि प्रयोगः । न चैवं सति रिपुगतदुःखबंधमरणादीनां राजाधीनत्वमात्रेण राजा दुःखी बद्धो मृत इत्यादिप्रयोगप्रसंगः । तत्प्रयोजकत्वसत्वेऽपि राज्ञोऽपि दुःखादियोग्यतया राज्ञि सदेव दुःखादिकमुच्यत इति वा राज्ञि तदानीं दुःखाद्यभावनिश्चयेऽपि तस्मिन्दुःखादिकमसदेवारोप्य राजविरुद्धेनोच्यते इति संशयापादकत्वादमंगलतया स्वस्थादिशब्दवत्तदप्रयोगोपपत्तेः । यद्वा स्वातंत्र्यमात्रं शब्दप्रवृत्तौ न प्रयोजकं किन्तु स्वगतत्वयोग्यत्वविशिष्टदोषत्वरहितं प्रति स्वातन्त्र्यम् ।

एवं च जयस्य राजगतत्वयोग्यत्वेऽपि दोषत्वराहित्यात्तं प्रति राज्ञः स्वातन्त्र्यं जयशब्दप्रवृत्तौ प्रयोजकम् । दुःखबन्धादीनां राजगतत्वयोग्यत्वाद्दोषत्वाच्च तानि प्रति तस्य स्वातन्त्र्यं दुःखिबद्धादिशब्दप्रवृत्तौ न प्रयोजकं, तेषां विष्णुगतत्वायोग्यत्वाद्दोषत्वेऽपि तानि विष्णवपेक्षयाश्रयत्वयोग्यत्वविशिष्टदोषत्वराहितानि भवन्तीति तानि प्रति तस्य स्वातन्त्र्यं दुःखिबद्धादिशब्दप्रवृत्तौ प्रयोजकमेव । आश्रयत्वमपि न तन्मात्रप्रयोजकं धनवोढरि भृत्ये धनीत्यप्रयोगात् । एवं च जीवा एव तु दुःखिनः । कार्यकारणबद्धौ तावित्यादिश्रुतिगतदुःखिबद्धादिशब्दा जीवगतदुःखबन्धादिस्वतन्त्रस्य विष्णोरेव वाचकाः । न तु लोके दुःखिबद्धादिशब्दा रिपुगतदुःखबन्धादिस्वतन्त्रस्य राज्ञो वाचका इति ।

नन्वेतदयुक्तम् । विविधकृष्णादिप्रतिमानिर्माणचतुरे शिल्पिनि तत्तत्प्रतिमासु कृष्णादिशब्दप्रवृत्तिनिमित्तं कृष्णाद्याकारं प्रति स्वातन्त्र्ये सत्यपि तस्मिन्कृष्णादिशब्दप्रयोगादर्शनात् । न च प्रतिमासु कृष्णादिशब्दाः कृष्णाद्याकारसादृश्येन गौणा एव न तु वाचका इति न तासु कृष्णाद्याकारः कृष्णादिशब्दप्रवृत्तिनिमित्तमिति वाच्यम् । 'इवे प्रतिकृतौ' वित्यधिकारे विहितस्य कन्प्रत्ययस्य जीविकार्थे चा पण्य इति लुपि कृते कृष्णादिशब्दानां कृष्णादिसदृशाकारप्रतिमावाचकत्वात् । न च प्रवृत्तिनिमित्ताश्रयत्वे सत्यपि धनवोढरि भृत्ये धनीतिप्रयोगादर्शनात्तदपि प्रयोजकं न स्यात्, प्रवृत्तिनिमित्तस्वातन्त्र्यस्यापि शब्दप्रयोजकत्वाभावे भृत्ये जयिनि राजन्यपि शब्द-

प्रयोगश्च न स्यादिति वाच्यम् । यतस्तदस्यास्त्यस्मिन्नित्यर्थे विहिता मत्वर्थीयाः प्रत्ययाः स्वभावात्केभ्यश्चित्प्रातिपदिकेभ्योऽस्यास्तीति षष्ठ्यर्थ एव भवंति केभ्यश्चिदस्मिन्नस्तीति सप्तम्यर्थ एव । षष्ठ्या अपि एकशतं संबन्धाः सन्ति । तेभ्यस्तेभ्यः प्रातिपदिकेभ्यस्तत्तत्सम्बन्धविशेष एव भवंति । केभ्यश्चित्षष्ठ्यर्थे सप्तम्यर्थे च भवन्ति । इयं च व्यवस्था प्रयोगानुसाराल्लभ्यत इति लाघवार्थं तदस्यास्त्यस्मिन्निति सामान्येन विधानम् । यथा पाय्यसान्नाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीष्वित्यादिसूत्रेषु हविः सामिधेनीविशेषादिवाचकानामपि सान्नाय्यादिशब्दानां सामान्येन हविराद्यर्थेषु विधानम् । एवं च धनप्रातिपदिकान्मत्वर्थीयाः षष्ठ्यर्था एव तत्रापि स्वस्वामिभाव एव भवन्तीति न वोढरि धनीतिप्रत्ययप्रसङ्गः । जयप्रातिपादकात्तु ते स्वस्वामिभावरूपे षष्ठ्यर्थे आश्रयरूपे सप्तम्यर्थे च भवन्तीति न राज्ञि भृत्ये च जयिशब्दप्रयोगानुपपत्तिः । यद्वा तत्फलभाजि राजन्युपचारेण जयिशब्दप्रयोगोऽस्तु । अत एव माघकाव्ये दृश्यते—

विजयस्त्वयि सेनायाः साक्षिमात्रेण दिश्यताम् ।
फलभाजि समीक्ष्योक्तेर्बुद्धेर्भोग इवात्मनि ॥ इति ॥

अतः सर्वेषामपि रूढानां यौगिकानां च शब्दानां प्रवृत्तिनिमित्ताश्रयत्वं तत्स्वातन्त्र्यं चेत्युभयमपि वाचकताप्रयोजकमिति रिक्तं वचः । नहि स्वस्थादिशब्दानामारोग्यादिमत्सु वाचकत्वे सत्यपि स्वर्गस्थत्वाद्यर्थान्तरप्रत्यायकत्वेनामङ्गलत्वादप्रयोग इतिवद्रि-

पूर्णां मारके राज्ञि मृतशब्दस्य वाचकत्वे सत्यप्य-मङ्गलत्वादेवाप्रयोग इति कश्चिदपि मन्यत इति।

अत्रोच्यते। प्रतिमागताकारं प्रति शिल्पिनो न स्वातन्त्र्यं तदाकारस्य शिक्षाद्यधीनत्वात्। शिक्षा तू-पदेष्टृपरम्परयाऽनवस्थिता। किञ्च प्रतिमायां कृष्णा-दिशब्द उपचारादेव वर्तते न वाचकः, उक्तं हि मनो-रमायाम्—अश्वक इत्यत्राश्वशब्दोऽश्व एव वर्तते, कन्प्रत्ययस्तु प्रतिकृतिरूपे सदृशे इत्येके। अन्ये तु गौर्वाहीक इतिवदश्वशब्दः सादृश्यनिबंधनादभेदोप-चारात्प्रतिकृतौ वर्तते कन्प्रत्यस्तु औपचारित्वद्योतक इत्याहुरिति। कृष्ण इत्यादौ लुप्तोऽपि कन्प्रत्यय औपचारिकत्वं द्योतयति। युक्तं चैतत्। कृष्णादि-शब्दानां प्रतिमासु योगरूढ्योरभावात्। नहि श्रीपा-णिन्यादिनाऽस्मिन्नर्थेऽयं प्रत्ययोऽस्मिन्नर्थे च प्रत्ययलु-वित्त्युक्तेऽपि सोऽर्थोऽस्य शब्दस्य वाच्य इतिधीः संभवति। औपचारिकत्वादिनापि तदर्थतोपपत्तेः। किञ्चारोपे सति निमित्तानुसरणं न तु निमित्तमस्ती-त्यारोप इति शिल्पिनि कृष्णादिशब्दप्रयोगापादना-सम्भवात्। नहि पंकजशब्दप्रवृत्तिनिमित्तस्य पंकज-निकर्तृत्वस्य कुमुदशृङ्गाटकादौ सत्वेऽपि पंकजशब्द-प्रयोग आपाद्यते, किन्तु पूर्वपूर्वप्रयोगानुसारेणोत्तरो-त्तरप्रयोगः कुमुदादौ वार्यते पद्मरूढिर्वा कल्प्यते। जयी धनीत्यादिशब्दानामुक्तरीत्या कथंचिदुपपादनेऽपि राजा जयति जेता जयशीलः राज्ञा जितम्, आढ्यः सम्पन्न इत्यादिप्रयोगाणामसमद्रीतिं विनानुपपत्तिरेव।

किंच साक्षात्सम्बन्धेन स्वगतत्वयोग्यत्वेन

विशिष्टं यद्दोषत्वं तद्रहितं स्वामित्वसम्बन्धेन स्वगतं यत्तदपि क्वचिच्छब्दप्रवृत्तौ निमित्तं भवति। दुःखिबद्धादिशब्दानां प्रयोगस्य हरौ दर्शनेन तथा कल्पनात्। माघोक्तिस्तु जयस्य स्वामित्वसंबंधेन राज्ञि उग्रसेन एव विद्यमानत्वेन श्रीकृष्णस्य राजत्वाभावेन तेन सम्बन्धेन तत्र जयस्याभाव इत्यभिप्रायः। मृतत्वस्य साक्षात्संबंधेन मारकराजगतत्वयोग्यत्वाद्दोषत्वाच्च न राजवाचकत्वम्।

यत्तु पञ्चाधिकरणीदूषणार्थं दर्शितयैव त्वन्मतमर्यादया समन्वयाध्यायगताधिकरणानां शैथिल्येन त्वदभिमतस्य विष्णौ व्यवस्थितस्य समन्वयस्यासिद्धौ तदस्मिन्सम्भावितयुक्त्यादिविरोधनिराकरणार्थानि द्वितीयाध्यायगताधिकरणान्यभित्तिचित्रायमाणान्यचिन्त्याद्भुतमहिम्नि तर्कागोचरे च परमेश्वरे युक्तिविरोधादिकं न परिपन्थीति वदतस्तव मते तान्यकाण्डताण्डवरूपाणि; तेषां तदुपजीवनेन प्रवृत्तानां साधनफलाध्यायगताधिकरणानां च शैथिल्यं स्पष्टमेव। यदि त्वदेकदृश्यैर्वाक्यैरेव समर्थनीयान्यधिकरणानि तदालं न्यायचिन्तनया। प्रत्यधिकरणं तव न्यायव्युत्पादनमपि नास्ति, "संभृतिद्युव्याप्त्यपि चात" इत्याद्यधिकरणानां वचनमात्रालम्बनानामपि त्वन्मते दर्शनात् संभृत्यधिकरणे हि सर्वगुणानामानन्दो ज्ञानं निर्दोषत्वरूपं सत्त्वं चेति त्रयो गुणा नियमेनोपास्याः प्रधानफलसिद्ध्ये, प्रधानफलस्य मोक्षस्य निर्दोषज्ञानानन्दरूपतया तं यथायथोपासते इत्यनुसारेण फलानुसारिगुणोपसंहारावश्यंभावादित्यानन्दादयः प्रधानस्येत्य-

धिकरणप्रतिपाद्यत्वेन तवाभिमतमर्थात्त एव सर्वै मुमुक्षूपास्याः इत्याद्ययुक्तम् "उक्षा स द्यावापृथिवी विभर्ति" "एष हि सर्वेषु लोकेषु भाती" ति श्रुतयः संभृतिद्युव्याप्त्योरपि सर्वमुमुक्षूपास्यत्वान्मोक्षे स्वाधःममरणस्य प्रकाशव्याप्तेश्च सर्वापेक्षितत्वेन तयोरपि तत्क्रतुन्यायविषयत्वादित्याद्विष्य यद्यप्येवं तथापि न ते सर्वोपास्ये।

देवादीनामुपास्यास्तु भृतिव्याप्त्यादयो गुणाः।
आनन्दाद्यास्तु सर्वेषामन्यथाऽनर्थकृद्भवेत्॥

इतिवचनादिति किंचिद्वचनमेव लिखित्वा सिद्धान्तितमिति। तत्तुच्छम्। पंचाधिकरणीदूषणाभासनिराकरणेन समन्वयाध्यायगतैर्दृढैर्न्यायैर्विष्णौ समन्वयस्य सुसिद्धत्वेन तत्र संभावितयुक्त्यादिविरोधनिरासाय द्वितीयाध्यायारम्भस्य साधुत्वात्। अद्भुताचिन्त्यशक्तौ हरौ वास्तवयुक्त्यादिविरोधाभावेऽपि तद्विरोधभ्रान्तिनिरासाय तत्तदधिकरणानामारंभस्य सार्थक्यात्। वास्तवविरोधस्य न्यायसहस्रेणापि निराकर्तुमशक्यत्वात्। न हि तत्र विरोधशंकैव नावतरतीत्यस्माभिः क्वाप्युक्तम्। न वा तवेवास्माकं प्रमाणागम्यं ब्रह्मास्ति। संभृतिसूत्रे च 'अत इति सूत्रकृद्भिरेव न्यायस्योक्तत्वात्। अत एव योग्यताविशेषादिति भगवत्पादैरपि विवृतत्वात्। अतः योग्यताविशेषादेव संभृतिद्युव्याप्ती अपि देवादीनामेवोपसंहर्तव्ये तेषां तत्र योग्यत्वात्। "यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति सर्वसम्प्रतिपन्नसयुक्तिकश्रुतेः। यच्च प्रकाशाद्यपेक्षितं तत्तु भगवद्रूप-

प्रतीत्यविनाभूतप्रकाशादिनैव लभ्यमिति टीकाकृदादिभिर्व्याख्यातत्वाच्च । स्वैकदृष्टवचनमात्रावलम्बनेनैवाधिकरणप्रवृत्तिर्न न्यायालम्बनेनापीत्यादिदूषणोक्तिस्तु मोहादेव ।

यत्तु ब्रह्मानन्दो मैत्रजीवानन्दान्न भिद्यते तं प्रत्यनादिभावावृतत्वात्तद्भोग्यत्वाच्च मैत्रजीवानन्दवत् । घटादीनां मैत्रं प्रति कुड्यादिभावावृतत्वेऽपि ज्ञानप्रागभावरूपानाद्यभावावृतत्वेऽप्यनादिभावावृतत्वं नास्तीति न तेषु व्यभिचारः, अनादिभावश्चाविद्यारूपः संसारदशायां जीवानन्दस्य ब्रह्मानन्दस्य च तं प्रत्यावारकस्तवापि संमतोऽस्तीति न पक्षे हेत्वसिद्धिर्नवा दृष्टान्ते साधनवैकल्यम् । जीवानन्दवद्ब्रह्मानन्दोऽपि मुक्तिदशायामभिव्यक्तो मुक्तानां भोग्य इति तदेतत् "प्रेयः पुत्रादि"ति श्रुतिं ब्रह्मविषयां वदतस्तवापि संमतमिति न द्वितीयहेतोरप्यसिद्धिः । मन्मते यद्यपि संसारदशायामावृतो जीवानन्द एव ब्रह्मानन्दस्तथापि तत्र साध्यनिश्चयाद्दृष्टान्तत्वमुचितम् । साध्यनिश्चयो हि दृष्टान्तत्वे तन्त्रं न तु पक्षादन्यत्वमपि । यद्वा ब्रह्मजीवानन्दयोर्बिम्बप्रतिबिम्बभावेन व्यावहारिकभेदसत्वात्पक्षदृष्टान्तभावः । प्रतिबिम्बे च चैतन्यांश एवानावृतः आनन्दांशस्त्वावृत इत्यभ्युपगमान्न साधनवैकल्यमिति । तत्तुच्छम् । अविद्यानिवृत्यनंतरमैत्रीयस्वरूपज्ञानविषयेष्वीश्वरीयलोकपार्षदादिष्वन्येषु चातीतानागतादिवस्तुषु चैत्रादिजीवान्तरेषु संसारदशायां मैत्रं प्रत्यनादिभावावृतेषु ततोभिन्नेषु व्यभिचारात् । संसारदशायामावृतो जीवा-

नन्द एव ब्रह्मानंदश्चेति सिद्ध्यैवानुमितेः प्रतिबंधात् पक्षे साध्यनिश्चयं ब्रुवाणोऽनुमानं प्रयुंजानश्चाद्भुत एव, ब्रह्मप्रतिबिंम्बस्य मैत्रादेरविद्याकल्पितस्याविद्यावृतत्वासम्भवेन दृष्टान्तस्य साधनवैकल्यात्। "आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला" इति त्वदीयोक्तेः। अज्ञानस्य स्वकाल्पिताविषयकत्वेऽनाद्यकल्पिताधिष्ठानस्यासिद्ध्यापत्तेः। प्रतिबिम्बे आनन्दांशे आवरणोक्तिस्तु स्वसिद्धान्ताज्ञानादेव, प्रतिबिम्बस्य तदीयांशस्य चाविद्याकल्पितत्वेनाज्ञानाविषयत्वात्। अज्ञानकल्पितस्याज्ञानविषयत्वेऽन्योन्याश्रयाद्यापत्तेश्च। अनादित्वादुत्पत्तौ ज्ञप्तौ चान्योन्याश्रयाद्यभावेऽप्यपेक्षायां तत्सत्वात्। अन्यथाऽज्ञानमपि स्वाश्रयं स्वकल्पितब्रह्माश्रयं वा स्यादित्यज्ञानविषयतया ब्रह्मणोऽपि सत्यत्वं न सिद्ध्येत्। न च पररीत्यैव परो बोध्यते, अस्मद्रीत्या व्यभिचारस्योक्तत्वात्। ब्रह्मानन्दस्य स्वविषयकापरोक्षात्तत्प्रयोज्येश्वरप्रसादद्वारा स्वानन्दानुभवरूपभोगं प्रति प्रयोजकत्वेनमैत्रानन्दस्य च साक्षाद्भोग्यत्वेन पक्षदृष्टान्तसाधारणस्य हेतोरभावात्। पुत्राद्यपेक्षयातिप्रियत्वोक्तिस्तु पुत्राद्यपेक्षयाधिकानन्दानुभवहेतुत्वादेव, दुःखवत्त्वस्योक्तहेतू मैत्राभेदव्यभिचारिणौ दुःखवत्त्वव्यभिचारित्वात्, घटत्वादिवदिति व्यभिचारोन्नायकस्योपाधित्वात्। दुःखवत्त्वं तु स्वप्रयोजकाविद्यावत्त्वसबन्धेनाविद्यासहकृतस्वामित्वसम्बन्धेन वास्ति मैत्रस्वरूपानन्दे, नास्ति ब्रह्मानन्द इत्यस्ति साध्यव्यापकत्वं साधनाव्यापकत्वं चेति। ब्रह्मानन्दो मैत्रानन्दाद्भिद्यते दुःखासमानाधि-

करणत्वात् घटत्वादिवदिति सत्प्रतिपक्षाच्च । दुःखा-सामानाधिकरण्यं चोक्तसम्बन्धेनैव । किंचाभेदस्य ब्रह्मभिन्नत्वे सत्यत्वे चाद्वैतहानिर्मिथ्यात्वे भेदस्य सत्यत्वापत्तिः । ब्रह्माभिन्नत्वे त्वभेदत्वहानिः । प्रतियोग्यादिसापेक्षस्य भेदाभावरूपाभेदस्य भ्रमकाले निश्चितस्य निरपेक्षभ्रमकालनिश्चितनिर्विशेषब्रह्मरूपत्वासंभवात् ।

यत्तु ब्रह्म जीवाभिन्नं निर्दुःखत्वे सति सुखवत्त्वात् । निर्विकारत्वे सति ज्ञानवत्त्वाज्जीववत्, मतद्वयेऽपि ब्रह्मणि जीवेऽपि स्वरूपसुखस्य स्वरूपज्ञानस्य च धर्म्यभिन्नत्वेऽपि विशेषबलादविद्यावशाद्वा धर्मत्वमप्यस्तीति न पक्षदृष्टान्तयोर्विशेष्यासिद्धिर्नापि विशेषणासिद्धिः मतद्वयेऽप्यन्तःकरणस्यैव दुःखादिसकलविकाराश्रयत्वात् । यद्यप्याध्यासिकविकाराश्रयत्वं जीवस्य प्रपंचाश्रयत्वं च तदुपादानस्य ब्रह्मणोऽस्ति तथापि वस्तुतो निर्दुःखत्वं निर्विकारत्वं च विशेषणं तच्च धर्मिसमसत्ताकदुःखविकारशून्यस्वरूपम् । वैषयिकसुखाश्रये वृत्तिज्ञानाश्रये चान्तःकरणे व्यभिचारवारणाय रूपादिषु तद्वारणाय हेतुद्वयेऽपि विशेष्यभाग इति । तत्तुच्छम् । ब्रह्म धर्मिज्ञानाबाध्यजीवत्वावच्छिन्नप्रतियोगिताकभेदवत्, सर्वज्ञत्वाज्जगत्कर्तृत्वाद्व्यतिरेकेण जीववत् । ब्रह्म जीवप्रतियोगिकवैशिष्ट्यव्यासज्ज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकस्वज्ञानाबाध्यभेदवत्, दुःखाभाववत्त्वात् सुखाभाववत्त्वान्निरविद्यत्वादसंसारित्वाद्घटादिवदित्यादिसत्प्रतिपक्षात् । दुःखादिकं मनोवृत्तिरूपं तदभावश्च स्वप्रयोजकाविद्यावत्त्वसम्बन्धेन । अनेन सम्बन्धेन दुःखादिकं यत्रास्ति स एव दुःखीति व्यव-

ह्रियते । अस्ति च जीवेऽनेन सम्बधेन नास्ति च ब्रह्मणि । अप्रयोजकं च न हि ब्रह्माभेदं विना निर्दुःख-त्वादिकमनुपपन्नम् । ब्रह्मभिन्नानामेवमुक्तजीवानां नि-र्दुःखत्वादिसंभवात् ।

यत्तु ब्रह्म देवदत्तजीवाभिन्नं तत्कर्मफलभोक्त्र-भिन्नत्वाद्देवदत्तजीववत्, त्वया ब्रह्मणो जीवगतपुण्य-फलभोक्तृत्वस्य गुहाधिकरणे उक्तत्वेन त्वन्मते तस्य कर्मफलभोक्त्रभिन्नत्वात् । मन्मते तथाभूतेन जीवे-नाभिन्नत्वाच्च मतद्वये नासिद्धिरिति । तत्तुच्छम् । जीवे तत्कर्मफलभोक्तृत्वं हि तत्प्रयोजकाविद्यावत्त्वा-दिसंबंधेन सुखदुःखादिमत्त्वम् । तत्सम्बन्धेनाहं सुखी दुःखीति दुःखाद्यनुभवितृत्वं वा । ब्रह्मणि तु सुकृतस्य भक्तार्पितस्य स्वीकारमात्रम् । सर्वथा जीवविलक्षण-मेव भोक्तृत्वमन्यथा "तयोरन्यः पिप्पलं स्वाद्वत्यन-श्नन्न्योऽभिचाकशीति" इतिश्रुतिविरोधः स्यात्, अतः पक्षदृष्टान्तयोरेकरूपेण हेतुरसिद्धः । ब्रह्म जीवाद्भि-द्यते दुःखाधिकरणत्वाभावाद्घटवत्, दुःखाधिकरणत्वं च स्वप्रयोजकाविद्यावत्त्वसंबंधेन । ब्रह्म देवदत्तजीवा-द्भिद्यते तत्पापफलभोक्तृत्वाभावात् घटवत् । न च तत्पापफलेत्यसिद्धिवारकत्वाद्व्यर्थम् ? केवलभोक्तृ-त्वाभावात् तत्पापफलभोक्तृत्वाभावस्य भिन्नत्वेन धर्मिभेदेन वैयर्थ्याभावात् । एकस्य कर्मणः फलस्य विलक्षणभोक्तृत्वद्वयं जीवेश्वरयोर्भेदेनाप्युपपद्यत इत्यप्रयोजको हेतुः । नह्येकमेवैकरूपं वा भोक्तृत्वं जीवेशयोरस्ति । यत्तु हिरण्यगर्भादिजीवा ब्रह्माभिन्ना-स्तदीयदिव्यदेहेन्द्रियैर्भोक्त्रभिन्नत्वाद् ब्रह्मवत् ।

"ब्राह्मेण जैमिनिरूपन्यासादिभ्य" इत्यधिकरणे त्वया

आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति ।
गच्छेच्च हरिपादाभ्यां मुक्तस्यैषा स्थितिर्भवेत् ॥

इत्यादिवाक्यं लिखित्वा सायुज्यमुक्तिगता हिरण्यगर्भादयो ब्रह्मणो देहं प्रविष्टास्तद्देहेंद्रियैरेव भुञ्जत इत्युक्तत्वात् न त्वन्मते हेत्वसिद्धिः । मयापि पर्यंकविद्यादिप्रतिपादितया रीत्या ब्रह्मणो देहेन्द्रियाणां भोगस्य च स्वीकृतदेहेंद्रियैर्भोक्त्रा ब्रह्मणा हिरण्यगर्भादीनामभेदस्याङ्गीकारात् ममापि पूर्ववद्विशेषभेदेन हेतुसाध्ययोर्भेद इति । तत्तुच्छम् । हिरण्यगर्भादयो जीवा ब्रह्मप्रतियोगिकस्वज्ञानाबाध्यभेदवन्तः, असर्वज्ञत्वाज्जगदकर्तृत्वाद् घटादिवदित्यादिप्रतिरोधात् । न चाज्ञत्वादकर्तृत्वादित्येवास्तु । शेषस्यासिद्धिवारकत्वेन वैयर्थ्यादिति वाच्यम् । ज्ञत्वकर्तृत्वाभावाभ्यां सर्वज्ञत्वजगत्कर्तृत्वाभावयोर्भिन्नत्वेन धर्मिभेदेन वैयर्थ्याभावात् । जीवान्तरदेहप्रविष्टस्य पिशाचादेस्तद्देहादिना भोगं कुर्वाणस्येव भेदे सत्यपि हिरण्यगर्भादेर्भोगोपपत्त्या हेतोरप्रयोजकत्वाच्च । यदपि जीवा ब्रह्माभिन्नास्तदिन्द्रियैर्भोक्त्रभिन्नत्वादाकाशादिप्रपंचस्रष्टृत्वाद्ब्रह्मवत् । यद्यपि मुक्तहिरण्यगर्भादीनामिव सर्वेषां जीवनां ब्रह्मदेहगतेन्द्रियैर्भोक्तृत्वं नास्ति । तथाप्यस्मदादिदेहगतान्यपीन्द्रियाणि ब्रह्मण एव करणानि । अस्मदादीनां तु स्वामिनः कुठारैर्भृत्यानामिव ब्रह्मकरणैरेव व्यवहार इति त्वया "ज्योतिराद्यधिष्ठानं स्वित्यधिकरणे व्यवस्थापितत्वात् त्वन्मते नाद्यहेतोरसिद्धिः । नापि द्वितीयहेतोरसिद्धिः, मनोरा-

ज्यविषयप्रपंचेषु जीवानां स्रष्टृत्वस्य त्वयाङ्गीकृतत्वादहमेव जगत्स्रष्टृ ब्रह्मेति जीवनां ध्यानादिसंभवाच्च। वासिष्ठरामायणे ऐन्दवोपाख्याने—

अन्तस्थेनैव मनसा चिन्तयामासुरादृताः।
ब्रह्माहं जगतां स्रष्टा कर्ता भोक्ता महेश्वरः॥
लोकपालसुरैः सार्धं भुवनानि चतुर्दश।
निर्मितानि मयैतानि तेषामन्तरहं स्थितः॥

इतीन्दुनामकब्राह्मणपुत्राणां तथा ध्यानप्रतिपादनाच्च। मन्मते तु पूर्ववद्धेतोरासिद्धिसाध्यावैशिष्ट्यनिरास इति। तत्तुच्छम्। जीवाः स्वज्ञानाबाध्यब्रह्मप्रतियोगिकभेदवन्तस्तन्नियम्यत्वाज्जडवदित्यादिप्रतिरोधात्। जीवानां ब्रह्मनियम्यत्वं च "य आत्मानमन्तरो यमयति" इत्याद्यन्तर्यामिब्राह्मणेन सिद्धमिति नासिद्धिः। इन्द्रियैर्भोक्तुर्विशिष्टस्य दृश्यत्वादिना त्वन्मते मिथ्यात्वेनास्मन्मतेऽसर्वज्ञत्वेन च ब्रह्माभेदासम्भवेनाद्यहेतोरासिद्धेः ब्रह्माधीनसत्ताकैरिन्द्रियैर्जीवभोगो न तु नित्यानावृताप्रतिवद्धसार्वज्ञवतो ब्रह्मण इति दृष्टन्तस्य साधनवैकल्यात्। इन्द्रियाधीनविषयभोगवतः परतन्त्रस्येश्वरत्वे मानाभावात्। नहीश्वराधीनैर्यैरिन्द्रियैर्जीवस्य भोगस्तैरन्यैर्वेन्द्रियैरीश्वरस्य भोग इत्यस्माभिः स्वीक्रियते। जीवेष्वसर्वज्ञेषु शुद्धे ब्रह्मणि च त्वन्मते जगत्स्रष्टृत्वाभावात्पक्षदृष्टान्तयोर्हेतोरभावात्। विशिष्टस्य तवातिरिक्तत्वान्मिथ्यात्वाच्च। मायाद्यवच्छिन्नस्य जगत्स्रष्टुरविद्याद्यवच्छिन्नस्य जीवस्य च भेदस्य त्वयाप्यङ्गीकारेण बाधाच्च। जीवानां मनोराज्यादिविषयप्रपञ्चस्रष्टृत्वेऽपि स्थूलबाह्यसर्व-

प्रपञ्चस्रष्टृत्वाभावेनास्मन्मते द्वितीयहेतोः पक्षेऽभावात् । विश्वामित्रादेरिव यत्किञ्चित्प्रपञ्चस्रष्टुर्जीवस्य "सर्वमसृजत" इत्यादिश्रुतिसिद्धेन सर्वस्रष्ट्रेश्वरेणाभेदं विनापि हेतोरुपपत्त्याऽप्रयोजकत्वात् । "अहं सर्वस्य प्रभव" इत्यादिस्मृतेश्च । वाशिष्ठरामायणस्य प्रामाण्ये तु तदुक्तध्यानस्य भ्रान्तिमूलकत्वेन विसंवादिनोऽर्थासाधकत्वात् । तत्साधकत्वेऽप्यान्तरमेव हि तत्सर्वं जगदन्तरं तेन सृष्टं न तु बाह्यम् । बाह्यदेहेन्द्रियादीनां तथा ध्यानादिहेतूनां तेनासृष्टत्वात् । न च ध्यानादिना जीवसृष्टेष्वीश्वरस्याप्यस्रष्टृत्वेन सोऽपि न स्रष्टेति वाच्यम् ? कुलालादिवदीश्वरप्रेरितस्यैव तत्र जीवस्य स्रष्टृत्वेनेश्वरस्य सर्वस्रष्टृत्वोपपत्तेः ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥

इतिस्मृतेः ।

किञ्च ब्रह्मजीवयोर्गुणोत्कर्षापकर्षसत्त्वाद्विरुद्धगुणाक्रान्त्यापि भेदः सिद्ध्यति । ननु ब्रह्मगतगुणोत्कर्षस्य तदभिन्नजीवसाधारण्येऽपि जीवे त्वदभिमतस्य ज्ञानबलानन्दोत्कर्षस्येव संसारदशायामावृतत्वेनाप्रकाशसम्भवस्य त्वन्मते ब्रह्मणोऽचिन्त्याद्भुतशक्तिमहिम्ना तस्य तर्कागोचरत्वमहिम्ना च विरुद्धगुणाक्रान्तेस्तद्भेदासाधकत्वस्य चोक्तत्वादिति चेन्न । नित्यस्य सदाप्रतिबद्धस्यानावृतस्येशगतस्य सार्वज्ञादेरेव जीवे स्वीकारे तत्प्रकाशस्य दुर्वारत्वात् । नह्येक एव गुणः क्वचिदधिकरणेऽनावृतः क्वचित्त्वावृत इति युक्तम् । जीवानन्दादेः स्वाधिकरणे सदा स्फुरद्रूपेभ्य ईश्वरानन्दादिभ्यो

भिन्नत्वादावरणोपपत्तेः । यत्तु त्वन्मतेऽस्मिन् शास्त्रे विशुद्धं ब्रह्म न विचार्यं तस्यानुपास्यत्वात्, किन्तु तत्प्रतिबिम्बभूतमेवोपास्यम् । अतः सृष्ट्यादिवाक्यमन्यच्च सर्वं सगुणवाक्यमुपास्यप्रतिबिम्बपरमेव न तु विशुद्धब्रह्मपरम् । विशुद्धं तु ब्रह्म "यतो वाचो निवर्तन्ते" "यद्वाचानभ्युदितम्" इत्यादिभिः कैश्चिदेवास्मदभिमतनिर्गुणवाक्यैर्लक्षणया प्रतिपाद्यमिति न विशुद्धे ब्रह्मणि जगत्कर्तृत्वादिविरुद्धगुणसिद्धिः । येन तस्य जीवाद्भेदः शंक्येतेति । तत्तुच्छम् । प्रतिमास्थानीयमनोनिर्मितमूर्तिगतस्य विशुद्धस्य ब्रह्मणो विश्वोदयादिकर्तुरेवास्माभिरुपास्यत्वाङ्गीकारात् । "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इत्यस्य तदेव विश्वोदयादिकर्तृ सदनन्तगुणमुपासनाख्यमनोवृत्तिनिर्मितमूर्तिगतं ब्रह्म विद्धि । यदिदमुपासते उपासनाख्यमनोवृत्त्या योगिनो निर्मिमते तदिदंरूपं ब्रह्म न किन्तु प्रतिमावत्तदधिष्ठानमित्यर्थः । नहि प्रतिमैव ब्रह्मत्वेनोपास्यते किन्तु तद्गतं ब्रह्म । अतोऽस्मद्रीत्यज्ञानमेवैतादृशप्रलापे बीजम् । किञ्चैवं सत्याकाशादिप्रपञ्चस्रष्टृत्वादिना जीवब्रह्माभेदसाधकानुमानानां दृष्टान्ते साधनवैकल्यंपक्षे हेत्वसिद्धिर्वा स्यात् । न च परमर्यादया पराभ्युपगन्तव्यार्थविरुद्धस्यापि पराभ्युपगममात्रमनुसृत्य हेतूकरणसम्भवादिति वाच्यम् । परार्थानुमानस्य स्वार्थानुमानपूर्वकत्वात् ।

यत्त्वर्जुनेन्द्रादीनां सुखादिवैचित्र्ये सत्यपि त्वदीयाऽभेदाभ्युपगमप्रदर्शनेन त्वन्मते ब्रह्मशक्त्यादिमहिम्ना विरुद्धगुणवत्त्वस्य भेदासाधकत्वव्यवस्थापनेन विरुद्धगुण-

योरपि जीवेशयोरभेदसिद्धिरिति तत्तुच्छम्। एकस्यैव कायव्यूहवतो योगिनो देहभेदेन सुखादिवैचित्र्यवद्-र्जुनेन्द्रयोरभेदेऽपि देहदेशादिभेदेन सुखादिवैचित्र्योप-पत्तावपि सर्वज्ञत्वासर्वज्ञत्वयोरेककालावच्छेदेनैकत्रानु-पपत्तेः। न च "यथा ह्ययं ज्योतिरात्मा विवस्वानपा भिन्ना बहुधैकोऽनुगच्छन् उपाधिना क्रियते भेदरूपो देवक्षेत्रेष्वयमजोऽयमात्मा" इत्यादिश्रुतिभिर्जीवब्रह्मा-भेदसिद्धिरिति वाच्यम्। प्रतिजीवमन्तर्यामितया ब्रह्मणो बहुभावस्योक्तत्वात्। उपाधिनैकदेशोऽवच्छि-द्यते कृत्स्नं वा? आद्ये सदेशत्वाद्द्वितीये कृत्स्नस्य-जीवत्वाद्यापत्योपाधेर्भेदकत्वासम्भवात्। प्रतिबिम्बस्य बिम्बान्यूनसत्ताकोपाधावेव सम्भवेन पारमार्थिक-ब्रह्मणः स्वन्यूनसत्ताकाविद्यादौ प्रतिबिम्बासम्भवात्। तादृशनियमाभावे मरीचिकाजलादावपि सूर्यादिप्रति-बिम्बापत्तेः। जीवेशयोरेकत्रस्थितिप्रतिपादकान्तर्यामि-ब्राह्मणविरोधस्य मतद्वयेऽपि सत्वात्। किञ्च त्वन्मते जीवाभिन्नमखण्डं त्वदभिमतं ब्रह्म श्रुतिभिर्न सिध्यति। वाक्यानां च तत्तत्पदार्थसंसर्गपरतायास्तदन्तर्गतप-दानां प्रवृत्तिनिमित्तासंगर्गपरत्वस्य वक्तव्यतया सखण्ड-विषयत्वावश्यम्भावात्।

ननु त्वया जीवे ब्रह्मणि च निर्विकारे गुणक्रिया-दीनां नित्यत्वेन धर्म्यभिन्नत्वेन समवायाश्रयाश्रयिभा-वादिसंसर्गराहितत्वेन चाभ्युपगतत्वेन त्वन्मते श्रुतीनां तत्संसर्गविषयत्वं न सम्भवतीति चेन्न। अहिकुण्डला-धिकरणन्यायेन प्रमेयत्वं प्रमेयं घटाभावे घटो नास्ती-त्यादिवच्चाभेदेऽपि धर्मधर्मिभावनिर्वाहस्य वस्तुस्वभाव-

रूपस्य विशेषस्यास्माभिः स्वीकारात्त्वयानङ्गीकारात् । महावाक्यमपि तव व्यर्थम् । अतिरिक्तैक्यादेर्हि बोधने सखण्डार्थकत्वापत्तिरद्वैतहानिश्च । अबोधने स्वरूपस्याज्ञानाद्यधिष्ठानतयाऽवान्तरवाक्यादिना च ज्ञातत्वेन महावाक्यवैयर्थ्यम् । न च धर्मिण एव संसर्गाविधया प्रतीतिश्चेत्तावताद्वैतापत्यभावेनाविरोध इति वाच्यम् । अभेदेऽपि वस्तुस्वभावाद्धर्मधर्मिभावस्वीकारेऽस्मन्मते प्रवेशापत्तेः । एतेन त्वदीयतत्तदधिकरणमर्यादालोचनयैव सविशेषाभिन्नमहातात्पर्यवेद्यं सच्चिदानन्दैकरसमद्वितीयं ब्रह्म सिद्ध्यत्त्वया निवारयितुं न शक्यत इति निरस्तम् । विविधविचित्रसत्याशेषविश्वस्य कर्तुर्नियन्तुर्नित्यनिरवद्यस्य नित्याप्रतिबद्धानावृतसार्वज्ञकस्येश्वरस्य जीवेऽल्पज्ञत्वादिगुणाविशिष्टे सत्यस्य भेदस्योपपादितत्वेनास्मद्रीतिमनुसृत्य जीवेशाभेदप्रलापस्य निरर्थकत्वात् ।

भुक्त्वा श्यामाकमुष्टिं
विपदमदमयद्दीनबन्धुर्द्विजाते-
र्दत्त्वा भूतीः पराः स्वा
धृतकर इति मा देहिमां पद्मया यः ॥
द्रौपद्याः शाकलेशात्त्रि
भुवनमपुषद्यज्वना दुःप्रसाध्यः ।
स्थित्वान्तःकारितत्वाद्
वै मम यदुवरो ग्रन्थतः प्रीयतां सः ॥

श्रीगोविन्दाविहारभूषितभुवः श्रीगोकुलात्प्राग्दिशि
क्रोशानां त्रियुगे पुरे द्विजवरा वंशे भरद्वाजतः ।
श्रीसन्नाहमुचो वसन्ति विबुधो वर्णी कुलेऽभूत्ततः
ग्रन्थो मारुतमण्डनेऽस्ति परितः पूर्णः कृतोऽविघ्नतः ।

विश्वोदयादिकर्तारं भर्तारं हि श्रियः सताम् ।
भवसन्तापहर्तारं वन्दे श्रीहयकन्धरम् ॥
भगवतोऽङ्घ्रिकञ्जस्य श्रीगोपालस्य रेणवः ।
क्रियासुर्वैभवं वाचामघराशेश्च शोधनम् ॥

इति श्रीमद्धनमालिविरचितो मध्वमुखालङ्कारः समाप्तः ।

——०——

# शुद्धिपत्रम्

| पत्रे | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | १२ | प्रमाणा | प्रणामा |
| ,, | १८ | अकर्मंकशे | अकर्मंको |
| ७२ | १८ | गुणायो | गुणयो |
| ८६ | ८ | प्रकृतो | प्रवृत्तौ |
| ९६ | १२ | मुहुर्मुहुः | मुनिमुण्डः |
| १०६ | १२ | प्राम्ह | प्राह्य |
| १०८ | ९ | पन्न्य | पन्य |
| ,, | १७ | ब्रह्य | ब्रह्म |
| ११० | ४ | प्रवले | प्रबले |
| ,, | ६ | ल्गिा | लिंगा |
| १११ | ६ | ऋुम | ऋूम |
| ११२ | २६ | श्रुतज्यो | श्रुतेः ज्यो |
| ११३ | १ | श्रू | श्रु |
| ,, | ७ | शीर्षं श्रिता | शीर्षंछ्रियः श्रिता |
| ,, | ८ | प्राणयन्तंभूरितितं | प्राणयन्ततंभूतिरिति |
| ,, | ८ | इन्दु | इन्द्र |
| ११४ | ६ | सदैव | सहैव |
| ,, | १३ | वा त | वा अत |
| ,, | २१ | परवे | परत्वे |
| ११५ | ३ | समुद्र | ननु समुद्र |
| ,, | १५ | न्तरधि | न्तराधि |
| ११६ | २ | भव्यत्येति | भव्यस्येति |
| ,, | २३ | हति | इति |
| १२३ | २५ | इत्यत्ति | इत्यस्ति |
| १२७ | २ | जीवनां | जीवानां |
| १३० | ५ | स्वानपा | स्वानपो |
| ,, | ७ | देवक्षे | देवंक्षे |
| ,, | २३ | चाम्युप | चाभ्युप |
| ,, | २६ | हस्य | हकस्य |
| १३१ | २३ | वैमम | मम तु |

